  

स्वताय, तादर्थ्ये चतुर्थी (पा० सू० २।३।१३; वा० १)। अवनेज्यते हस्ता-द्यनेनेत्यवनेजनम्। करणे कृत्यः (पा० सू० ३।४।७०)। 'अजाहुः आनीत-वन्तः, परिचारकाः। 'यथा' 'इदं' अधुना 'पाणिभ्याम्' हस्तार्थं यदवनेजनं तस्मै 'आहरन्ति'—तथा आजह्नुः। 'तस्य' मनोः प्रक्षालयतः 'मत्स्यः' 'पाणी' प्राप्तः। भाविनोऽर्थस्य सिद्धयर्थं देवतैव मत्स्यरूपेणाजगाम॥ १॥

स हास्मै वाचमुवाद। बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघऽइमाः सर्व्वाः प्रजा निर्व्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति॥ २॥

उसने उस (मनु) को ये वचन कहे "मेरा पालन करो, (मैं) तुम्हें बचाऊँगी" "(तूं) किससे मुझे बचायेगी?" "जल की बाढ़ इन सभी प्राणियों को वहा देगी, उससे तुझे बचाऊँगी।" "(मैं) कैसे तेरा पालन (करूँ)?"॥ २॥

स हास्मै। 'सः' मत्स्यः 'अस्मै' मनवे 'वाचम्' उदितवान्। कीदृशीम्? 'बिभृहि' पुषाण (पुष्णीहि) 'मा' माम्। किमर्थम्? 'पारयिष्यामि'—"पाल् रक्षणे" (चु० प० ५५) रक्षिष्यामि 'त्वा' 'इति'। 'कस्मात्'? इति भयहेतुप्रश्नः (पा० सू० १।४।२५) वहतीति 'औघः' उदकसङ्घातः, स इमा भारतवर्षनिवासिनीः 'प्रजा' निःशेषं वोढा—देशान्तरं प्रापयिता; तस्माद्भयहेतोस्त्वा पालयितास्मि 'इति'॥ २॥

स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्यऽएव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा तामतिवर्द्धाऽअथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्द्धाऽअथ मा समुद्रमभ्यवहरासि तर्हि वाऽअतिनाष्ट्रो भवितास्मीति॥ ३॥

उसने कहा "जब तक हम छोटी हैं, तब तक हमारे वहुत-से विनाशक

होते हैं। मछली ही मछली को खाती (निगलती) है। पहले मुझे घड़े में पालना। जब मैं उस घड़े में न समाऊँ, तब गड्ढा खोद कर उसमें मुझे पालना। जब मैं उसमें भी न समा सकूँ तब मुझे समुद्र में ले जाना, तब मैं विनाश से बच जाऊँगी" ॥ ३ ॥

सा होवाच। 'क्षुल्लकाः' क्षुद्रकाः—अल्पकाः 'नाष्ट्रा'—इति। गिलति "गॄ निगरणे" (तु० प० १२९) निगरति। बिभरासि अध्येषणायां (पा० सू० ३।३।१६१) लिङर्थे लेट् (पा० सू० ३।४।७) बिभृयाः—पुष्णीयाः। एवमेव 'अभ्यवहरसि' 'उपासासै' 'आपद्यासै' इति व्याख्येयानि। 'अतिवर्द्धै' अतिरिच्य वर्द्धितास्मीति प्राप्ते "यदा यद्योरुपसंख्यानम्" (पा० सू० ३.३.१४७ वा०) ततश्च 'लिङर्थे लेट्' (पा० सू० ३।४।७) इति यदायोगे लेट्। 'कर्षूः' (निघं० ३।२३।६) खातिकाः 'अतीतो नाष्ट्रान् नाशयितॄन्—इति 'अतिनाष्ट्रः' ॥ ३ ॥

शश्वद्ध झषऽआस। स हि ज्येष्ठं वर्द्धतेऽथेतिथीं समां तदौघऽआगन्ता तन्मा। नावमुपकल्प्योपासासै सऽऔघ ऽउत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥ ४ ॥

वह शीघ्र ही झष (बड़ी मछली) बन गई। क्योंकि वह सबसे अधिक बढ़ती है। उसने कहा—"अमुक (उस) वर्ष में वह जल की बाढ़ आयेगी। तब नाव बना कर मेरी प्रतीक्षा करना। (मेरी बात मानना)। उस जल की बाढ़ के बढ़ जाने पर नाव पर चढ़ जाना; और (तब) मैं तुझे उस (जलप्रवाह) से बचा लूँगी" ॥ ४ ॥

शश्वद्ध। शश्वच्छब्दोऽत्र सामर्थ्यात् क्षिप्रवचनः। 'झषः' महामत्स्यः, क्षिप्रमेव महामत्स्योऽत्रावर्त्ततेत्यर्थः। अथ कस्मात्स शीघ्रमेव महामत्स्यः संवृत्तः ? 'हि' यस्मात् 'सः' 'ज्येष्ठं' बृहत्तमं 'वर्द्धते'; सर्व एव हि जलचरा अतिशयेन वर्धन्ते, स तु मत्स्यत्वादनाष्ट्रत्वाच्च बृहत्तमं वर्धत इति श्रुतिवचनम्। 'अथेतिथीम्' इति मत्स्यवचनम्—अयमपि समुद्रमभ्यवहृते 'इतिथीम्' इत्यभिनयः, तेन सङ्ख्येयां समां दर्शितवान्; इयतीनां

  

दशानां द्वादशानां वा पूरणी-इतिथी—इदम् इशादेशश्छान्दसः, (पा० सू० ५।३।३) टित्त्वात् ङीप् (पा० सू० ४।१।१५) इयत्यस्तिथयो यस्य सा—इतिथीति केषुचित्कोषेषु,—तेष्वपि इयतिथीं यावतिथीं नाव... थीमिति प्राप्ते छान्दसो यशब्दवशब्दलोपः। समाः संवत्सरः, ता... 'समाम्' समायामित्यर्थः, 'तत्' स इति लिङ्गव्यत्ययः—स पूर्वोक्तः 'औघ' 'आगन्ता', 'तत्' तदा 'नावम् उपकल्प्य' माम् 'उपसासै' उपासीथाः, 'औघे' चोत्थिते तां 'नावम्' त्वम् 'आपद्यासै' आरोहेरित्यर्थः ॥ ४ ॥

तमेवं भृत्वा समुद्रमभ्यवजहार। स यतिथिं तत्समां परि-दिदेश ततिथीं समां नावमुपकल्प्योपासाञ्चक्रे सऽओघ उत्थिते नावमापेदे तं स मत्स्यऽउपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव ॥ ५ ॥

—शतपथब्राह्मणम् १, ८, १, ५

इस प्रकार उस मछली का पालन-पोषण करने के बाद, मनु उसे समुद्र में ले गया। मछली ने जो वर्ष बताया था उसी वर्ष मनु ने नौका बना कर मछली की बात पूरी की। जल-प्रवाह के बढ़ जाने पर, वह नौका में बैठ गया। वह मछली मनु के पास तैर कर आगई। उसने मछली के सींग पर नौका की रस्सी बाँध दी और उसके कारण वह उत्तर पर्वत पर शीघ्र ही पहुँच गया ॥ ५ ॥

तमेवं भृत्वा, यावतीनां पूरणीं 'यतिथीं' 'परिदिदेश' परिदिष्टवान्-आख्यातवान्, 'ततिथीं' तावतीनां पूरणीं 'समाम्' 'नावमुपकल्प्य' मत्स्य-मुपासितवान्। 'औघे' च 'उत्थिते' 'नावम्' अधिरूढः 'तं' च मनुं 'स मत्स्यः' 'उप'—समीपे नीचैः एनमुपकर्ष्यमिति सम्बन्धः, 'आपुप्लुवे' आगतः। 'तस्य' मत्स्यस्य 'शृङ्गे' भवितव्यतयैव 'निष्पादिते 'नावः पाशं' प्रतिबद्धवान्। 'तेन' पाशेन सह मत्स्यः 'एतम्' 'उत्तरं गिरिम्' हिमवन्त-मधिजगाम ॥ ५ ॥

—सायणभाष्यम्

  

ऋतं च स्वाध्यायप्रवचने च सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥ १ ॥

तैत्तिरीयोपनिषद्, शिक्षावल्ली, अनुवाक ९.

ऋत (शास्त्रादि द्वारा बुद्धि में निश्चय किया हुआ अर्थ) तथा स्वाध्याय (शास्त्रों का अध्ययन) और प्रवचन (अध्यापन अथवा वेदपाठ-रूप ब्रह्मयज्ञ) (इनका अनुष्ठान करना चाहिए)। सत्य (सत्य बोलना) तथा स्वाध्याय और प्रवचन (ये अनुष्ठान किये जाने योग्य हैं)। तप तथा स्वाध्याय और प्रवचन (इन्हें करें)। दम (इन्द्रियों का निग्रह) तथा स्वाध्याय और प्रवचन (इनका अनुष्ठान करे)। शम (चित्त की शान्ति) तथा स्वाध्याय और प्रवचन (ये सब करने योग्य हैं)। अग्नि (अग्नियों का आधान) तथा स्वाध्याय और प्रवचन (ये कर्तव्य हैं)। अग्निहोत्र (होम) तथा स्वाध्याय और प्रवचन (इन्हें करे)। अतिथि (अतिथिसत्कार) तथा स्वाध्याय और प्रवचन (इन्हें करे)। मानुषकर्म (लौकिक व्यवहार—जैसे विवाहादि) तथा स्वाध्याय और प्रवचन ( इन्हें करता रहे)। प्रजा (सन्तान उत्पन्न करना) तथा स्वाध्याय और प्रवचन (इन्हें करे)। प्रजन (ऋतुकाल में पत्नीगमन) तथा (इसके साथ) स्वाध्याय और प्रवचन (करता रहे)। प्रजाति (पौत्र की उत्पत्ति)

तथा स्वाध्याय और प्रवचन (इन्हें करे)। सत्य ही (कर्तव्य है) रतीतर का वंशज सत्यवचा मानता है। तप ही (कर्तव्य है), ऐसा तपोनिष्ठ पौरुशिष्टि का मत है। स्वाध्याय और प्रवचन ही (कर्तव्य ऐसा मुद्गल के पुत्र नाक का मत है। अतः वे (स्वाध्याय और प्रवच ही तप हैं, वे ही तप हैं॥ १ ॥

ऋतमिति व्याख्यातम्। (ऋतं—यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुप निश्चितमर्थम्, शिक्षावल्ली १, शा० भाष्य)। स्वाध्यायोऽध्ययन प्रवचनमध्यापनं ब्रह्मयज्ञो वा। एतान्यृतादीन्यनुष्ठेयानीति वाक्यशे सत्यं च सत्यवचनं यथा व्याख्यातार्थं वा। (सत्यमिति स एव वा कायाभ्यां संपाद्यमानः शिक्षावल्ली १, शाङ्करभाष्य)। तपः कृच्छ्रादि दमो वाह्यकरणोपशमः। शमोऽन्तःकरणोपशमः। अग्नय आधातव्या अग्निहोत्रं च होतव्यम्। अतिथयश्च पूज्याः। मानुषमिति लौकि संव्यवहारः, तच्च यथाप्राप्तमनुष्ठेयम्। प्रजा चोत्पाद्या। प्रजन प्रजननमृतौ भार्यागमनमित्यर्थः। प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयित इत्येतत्।

सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येव सर्वेण सह स्वाध्यायप्रवचनग्रहणम्। स्वाध्यायाधीनं ह्यर्थज्ञानम्, अ ज्ञानायत्तं च परं श्रेयः, प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थञ्च। अ स्वाध्यायप्रवचनयोरादरः कार्यः।

सत्यमिति सत्यमेवानुष्ठातव्यमिति सत्यमेव वचो यस्य सोऽयं सत्यव नाम वा तस्य। रातीतरो रतीतरस्य गोत्रो रातीतराचार्यो मन्यते। त इति तप एव कर्तव्यमिति तपोनित्यस्तपसि नित्यस्तपः परस्तपोनित्य इ वा नाम पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते। स्वा ध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल आचार्यो मन्यते। तद्धि तपस्तद्धि तपः। हि यस्मात् स्वाध्यायप्रवच

एव तपस्तस्मात्ते एवानुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम् ।

—शाङ्करभाष्यम्

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ १ ॥

वेद पढ़ाने के बाद आचार्य शिष्य को उपदेश देता है—सत्य बोलना । धर्म का पालन करना । स्वाध्याय से प्रमाद न करना । आचार्य के लिए (उसका) प्रिय धन लाकर, (आचार्य के आज्ञा देने पर, अपने अनुरूप स्त्री से विवाह करके) सन्तान की परम्परा को मत तोड़ना । सत्य से प्रमाद नहीं करना चाहिए । धर्म (अनुष्ठेय कर्म-विशेष) से प्रमाद नहीं करना चाहिए । कुशल (आत्मरक्षा में उपयोगी कर्मों) से प्रमाद नहीं करना चाहिए । भूति (ऐश्वर्य के लिए होने वाले पुण्य कर्मों) से प्रमाद नहीं करना चाहिए । अध्ययन और अध्यापन से प्रमाद नहीं करना चाहिए ॥ १ ॥

वेदमनूच्याध्याप्याचार्योऽन्तेवासिनं शिष्यमनुशास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः, 'अतोऽवगम्यतेऽधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति । 'बुद्ध्वा कर्माणि चारभेत' इति स्मृतेश्च ।" कथमनुशास्तीत्याह—

सत्यं वद यथाप्रमाणावगतं वक्तव्यं तद्वद । तद्वद्धर्मं चर । धर्म इत्यनुष्ठेयानां सामान्यवचनं सत्यादिविशेषनिर्देशात् । स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं मा कार्षीः । आचार्यायाचार्यार्थं प्रियमिष्टं धनमाहृत्यानीय दत्त्वा विद्यानिष्क्रयार्थम्, आचार्येण चानुज्ञातोऽनुरूपान् दारानाहृत्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः । प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या ।

अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभि प्रजाप्रजनप्रजातित्रयनिर्देशसामर्थ्यात् । अन्यथा प्रजनश्चेत्येतदेको वक्ष्यत् ।

सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः । सत्याच्च प्रमदनप्र प्रसङ्गः, प्रमादशब्दसामर्थ्यात् । विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थ अन्यथाऽसत्यवदनप्रतिषेध एव स्यात् । धर्मान्न प्रमदितव्यम् । धर्म स्यानुष्ठेयविषयत्वादननुष्ठानं प्रमादः स न कर्तव्यः । अनुष्ठातव्य धर्म इति यावत् । एवं कुशलादात्मरक्षार्थात् कर्मणो न प्रमदितव्य भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्य स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । स्वाध्यायोऽध्ययनं प्रवचनमध्या ताभ्यां न प्रमदितव्यम् । ते हि नियमेन कर्तव्ये इत्यर्थः ॥ १ ॥

**देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदे भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्या कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माक सुचरितानि । तानि त्वयोपास्यानि ॥ २ ॥**

देवकार्य (देवताओं से सम्बन्ध रखने वाले काम) और पितृकार्यों प्रमाद नहीं करना चाहिए । माता को देवता मानना । पिता को देव मानना । आचार्य (अध्यापक) को देवता मानना । अतिथि को देव मानना । जो अनिन्दनीय (शिष्टाचार रूप) कर्म हैं, उन्हीं का से करना चाहिए, दूसरों का नहीं । हमारे (अध्यापकों के) भी जो सुचरि (शास्त्र से अविरुद्ध कर्म) हैं, तुझे उन्हीं की उपासना करनी चाहिए॥

तथा देवपितृकार्याभ्यां न प्रमदितव्यम् । दैवपित्र्ये कर्मणी कर्तव्ये मातृदेवो माता देवो यस्य स त्वं मातृदेवो भव स्याः । एवं पितृदे आचार्यदेवो भव । देवतावदुपास्या एत इत्यर्थः । यान्यपि चान्यान्यनव न्यनिन्दितानि शिष्टाचारलक्षणानि कर्माणि तानि सेवितव्यानि कर्तव्यानि त्वया । नो न कर्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि । यान्यस्मा

माचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वयोपास्यान्यदृष्टार्थान्यनुष्ठेयानि, नियमेन कर्तव्यानीति यावत् ॥ २ ॥

नो इतराणि। ये के चास्मच्छ्रेया ँ सो ब्राह्मणाः । तेषां त्वयासनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥

दूसरों की नहीं । जो कोई भी (विशिष्ट) हमसे भी श्रेष्ठ ब्राह्मण हैं, उन्हें आसनादि देकर तुझे (उनका) श्रम दूर करना चाहिए । (यदि कुछ दान देना हो तो) श्रद्धा से ही देना चाहिए । अश्रद्धा से नहीं देना चाहिए । (अपने) ऐश्वर्य के अनुसार देना चाहिए । लज्जापूर्वक देना चाहिए । भय मानते हुए देना चाहिए । संवित् (मित्रता आदि के उद्देश्य) से देना चाहिए । (इस प्रकार व्यवहार करते हुए) यदि तुझे कर्म (श्रौत या या स्मार्त कर्म) के विषय में सन्देह या वृत्त (आचरणरूप व्यवहार) के विषय में सन्देह हो ॥ ३ ॥

नो इतराणि विपरीतानि आचार्यकृतान्यपि । ये के च विशेषिता आचार्यत्वादिधर्मैरस्मदस्मत्तः श्रेयांसः प्रशस्यतरास्ते च ब्राह्मणा न क्षत्रियादयस्तेषामासनेनानसनदानादिना त्वया प्रश्वसितव्यम् । प्रश्वसनं प्रश्वासः श्रमापनयः । तेषां श्रमस्त्वयापनेतव्य इत्यर्थः। तेषां चासने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः केवलं तदुक्तसारग्राहिणा भवितव्यम् । किञ्च यत्किञ्चिद्देयं तच्छ्रद्धयैव दातव्यम् । अश्रद्धया अदेयं न दातव्यम् । श्रिया विभूत्या देयम् दातव्यम् । ह्रिया लज्जया च देयम् । भिया भीत्या च देयम् । संविदा मैत्र्यादिकार्येण देयम् ।

अथैवं वर्तमानस्य यदि कदाचित्ते तव श्रौते स्मार्ते वा कर्माणि वृत्ते वाचारलक्षणे विचिकित्सा संशयः स्यात् । ३ ॥

ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः । संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।। ४ ।।

—तैत्तिरीयोपनिषद्, शिक्षावल्ली, अनुवाक ११

तो वहाँ जो संमर्शी (विचारशील), युक्त (कर्म में तत्पर), आयुक्त (स्वेच्छा से कर्मपरायण), अलूक्ष (सरल-हृदय), और धर्मकामी (धर्म की अभिलाषा करने वाले) ब्राह्मण हों, वे (ब्राह्मण) वहाँ (उस कर्म या आचरण के विषय में) जैसा व्यवहार करें, तूं भी वैसा ही उस विषय में व्यवहार कर। इसी प्रकार अभ्याख्यातों (जिन पर कोई संशययुक्त दोष आरोपित किया गया हो) के प्रति भी, वहाँ जो विचारशील, कर्म में तत्पर, स्वेच्छा से कर्मों में प्रवृत्त, सरलहृदय और धर्माभिलाषी ब्राह्मण हों और वे जैसा व्यवहार करें, तू भी उनके प्रति वैसा ही (व्यवहार) कर। यह आदेश (विधि) है। यह उपदेश है। यह वेद का रहस्य है। यह अनुशासन (ईश्वर का वाक्य) है। इसी प्रकार ही उपासना करनी चाहिए और यह सब इसी प्रकार उपासना करने के योग्य है ।। ४ ।।

ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन सम्बन्धः कर्तव्यः । संमर्शिनो विचारक्षमाः । युक्ता अभियुक्ताः कर्मणि वृत्ते वा आयुक्ता अपरप्रयुक्ताः । अलूक्षा अरूक्षा अक्रूरमतयः । धर्मकामा अदृष्टार्थिनोऽकामहता इत्येतत् स्युर्भवेयुः । ते यथा येन प्रकारेण ब्राह्मणास्तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरंस्तथा त्वमपि वर्तेथाः । अथाभ्याख्यातेषु अभ्याख्याता अभ्युक्ता दोषेण संदिह्यमानेन संयोजिताः केनचित् तेषु

  

यथोक्तं सर्वमुपनयेद् ये तत्रेत्यादि । एष आदेशो विधिः । एष उपदेशः पुत्रादिभ्यः पित्रादीनाम् । एषा वेदोपनिषद् । वेदरहस्यं वेदार्थं इत्येतत् । एतदेवानुशासनमीश्वरवचनम् । आदेशवाक्यस्य विधेरुक्तत्वात् सर्वेषां वा प्रमाणभूतमनुशासनमेतत् । यस्मादेवं तस्मादेवं यथोक्तं सर्वमुपासितव्यं कर्तव्यम् । एवमु चैतदुपास्यमुपास्यमेव चैतन्नानुपास्यमित्यादरार्थं पुनर्वचनम् ॥ ४ ॥

—शाङ्करभाष्यम्

---

# दशकुमारचरितम्

## अष्टमोच्छ्वासः

(१)अथ सोऽप्याचचक्षे—'देव! मयापि परिभ्रमता विन्ध्या टव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः क्वचित्कूपा भ्याशेऽष्टवर्षदेशीयो दृष्टः।स च त्रासगद्गदमगदत्—'महाभाग! क्लिष्टस्य मे क्रियतामार्य ! साहाय्यकम् । अस्य मे प्राणापहा हारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः । तमलमस्मि नाहमुद्धर्तुम्' इति ।

## कथा का पूर्वांश

[दण्डी के प्रख्यात गद्यकाव्य दशकुमारचरित में भिन्न-भिन्न देशों भ्रमण के लिए निकले हुए दस कुमारों की यात्राओं के अनुभवों का रोच वृत्तान्त है । मगध देश के सम्राट् राजहंस थे । उनके धर्मपाल, पद्मोद्भ और सितवर्म नाम के कुल-परम्परागत तीन मंत्री थे । एक बार राजहं युद्ध में मानसार नाम के राजा से हार गये । खिन्न होकर वे वामदेव ना के ऋषि की शरण में गये । उन्होंने भविष्यवाणी की कि उनके राजवाह नाम का पुत्र उत्पन्न होगा जो शत्रु को पराजित करेगा । उस राजकुमार जन्म के साथ ही सम्राट् राजहंस के मंत्रियों के यहाँ भी पुत्र हुए । राजहं के मित्र विदेह देश के सम्राट् प्रहारवर्मा के भी दो पुत्र हुए ।

ये सब राजकुमार और मंत्रियों के पुत्र एक ही स्थान पर निवास क हुए, सम्राट् राजहंस की देखरेख में बड़े होकर वीर योद्धा बन गए । ए दिन जब वामदेव नामक ऋषि ने इन दस कुमारों—(१) राजवाह

  

(२) अपहार वर्मा, (३) उपहार वर्मा, (४) मित्रगुप्त, (५) मंत्रगुप्त, (६) अर्थपाल, (७) विश्रुत, (८) पुष्पोद्भव, (९) प्रमति, (१०) सोमदत्त)—को सम्राट् राजहंस के साथ देखा तो उसे कहा कि इन कुमारों को दिग्विजय के लिए भेजें। मुनि की आज्ञा के अनुसार राजकुमार राजवाहन अपने सहचरों के साथ विजय-यात्रा के लिए निकल पड़ा। ये कुमार पहले तो यात्रा में एक-दूसरे से विछुड़ गए परन्तु अन्त में सबके सब फिर मिल गए। उस अवसर पर प्रत्येक कुमार ने अपनी अपनी यात्रा के रोचक तथा रोमांचकारी अनुभवों को कथा के रूप में एक-दूसरे को सुनाया। दशकुमारचरित काव्य के आठ उच्छ्वासों में इन्हीं कुमारों के चरित का उल्लेख है।

प्रस्तुत अष्टम उच्छ्वास में राजहंस का मंत्रिपुत्र विश्रुत अपने अनुभवा का वर्णन करते हुए कहता है—]

(१) इसके वाद उस (विश्रुत) ने भी कहा—"हे स्वामी, मैंने भी विन्ध्य नामक वन में घूमते हुए, (वहाँ) कहीं कुएँ के समीप लगभग आठ वर्ष का कोई वालक देखा, जो कष्ट-सहन के योग्य नहीं था, पर फिर भी भूख और प्यास से पीड़ित था। और उसने भय के कारण रुँधी हुई वाणी से कहा था—'हे महाभाग, मुझ दुःखी की, हे आर्य, सहायता कीजिये। प्राणों को सुखा देने वाली मेरी प्यास को बुझाने के लिए, पानी खींचता हुआ कोई वृद्ध, जो मेरा एकमात्र सहारा था, यहाँ कूप में गिर पड़ा है। मैं उसे बाहर निकालने में असमर्थ हूँ।'

पदचन्द्रिका—(१) इदानीं विश्रुतनामा कुमारः स्वचरितं वक्तुमुपक्रमते। अथानन्तर्यार्थे। स विश्रुतनामा। अक्लेशार्हः, क्लेशार्हो नेत्यर्थः। कूपो जलाशयः। अभ्याशे समीपे। अष्टवर्षदेशीयः, 'कल्पब्देश्यदेशीयरः' (वा०) इति शब्दान्न्यूनार्थे। साहाय्यकं सहायस्य भावस्तथा। पिपासा पातुमिच्छा प्रतिकर्तुं दूरीकर्तुम्। उदञ्चन्निष्कासयन्। कोऽप्यविदितकुलनामा। निष्कलः स्थविरः, वृद्ध इति यावत्; 'निष्कलः स्थविरः समौ' इति वैजयन्ती।

(२) अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बाल वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णस्तं जरन्तमब्रवम्––'तात ! क एष बालः, को वा भवान्, कथं चेयमापदापन्ना ?' इति ।

(२) मैंने शीघ्रता से पहुँच कर, किसी बेल के सहारे (उसे रस्सी बना कर) उस वृद्ध को बाहर निकाल कर, और (अन्दर से खोखली) बाँस की नली की सहायता से मुख द्वारा (खींच कर) निकाले गए जल से तथा तीर की फैंक से भी ऊँचे लकुच (बड़हर) वृक्ष की चोटी से पत्थर के द्वारा गिराये गए पाँच-छः फलों से, उस बालक को पुनर्जीवन प्रदान कर और फिर वृक्ष के नीचे बैठते हुए मैंने उस वृद्ध से कहा–'तात, यह बालक कौन है ? आप कौन हैं ? और कैसे यह विपत्ति आ पड़ी ?'

(२) अथेति । व्रतत्या वल्ल्या, 'वल्ली तु व्रततिर्लता' इत्यमरः। रज्जुस्थानीकृतयेति भावः । वंशनाली वेणुः । पञ्चषैः पञ्च षड् वा। 'संख्ययाव्यय––' (पा. २।२।२५) इत्यादिना बहुव्रीहिः, 'बहुव्रीहौ संख्येये डजबहुगणात्' (पा. ५।४।७३) इति समासान्तो डच् । शरक्षेपो बाणगमनं ततोऽप्युच्छ्रितस्य, उच्चस्येत्यर्थः । लकुचवृक्षस्य, 'लकुचो लिकुचो डहुः' इत्यमरः; भाषया 'बडहर' इति प्रसिद्धः । जरन्तं वृद्धम् ।

(३) सोऽश्रुगद्गदमगदत्––'श्रूयतां महाभाग ! विदर्भो नाम जनपदः, तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रो बुद्धिमूर्तिभ्याम्, उत्थानशीलः, शास्त्रप्रमाणः, शक्यभव्यकल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्व-

  

दत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता कोशवाहनयोः , यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः सद्यःप्रतिकर्ता दैव-मानुषीणामापदाम्, षाड्गुण्योपयोगनिपुणः, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्मा नामासीत् ।

(३) उसने अश्रुओं के कारण रुँधे हुए कण्ठ से कहा–'सुनिये, महाभाग, विदर्भ नाम का देश है, उसमें भोजवंश का भूषण, धर्म का अंशावतार-सा, अत्यन्त वलशाली, सत्य बोलने वाला, वहुत दान देने वाला, नम्र, प्रजा का शिक्षक, सेवकों का प्यारा, यशस्वी, बुद्धि और शरीर से उन्नत, पुरुषार्थी, शास्त्र को प्रमाण मानने वाला, शक्य (सुकर कर्म), भव्य (जनता के अभीसिप्त या कल्याणकारी कर्म) तथा कल्प (विफल न होने वाले) कर्म को आरम्भ करने वाला, विद्वानों का आदर करने वाला, सेवकों का अभ्युदय करने वाला (या उन पर रौब रखने वाला), वन्धुओं को उन्नत करने वाला, शत्रुओं को झुकाने वाला, निरर्थक वार्तालाप (अटपटी बातों) पर कान न धरने वाला, गुणों से कभी तृप्त न होने वाला, कलाओं में अति निपुण, धर्मशास्त्र और अर्थशास्त्र (राजनीति) में पारंगत, थोड़े-से भी उपकार के बदले में अत्यधिक प्रत्युपकार करने वाला, कोश और वाहन (हाथी-घोड़े आदि) की देखभाल रखने वाला, (विभिन्न भागों के) सभी अध्यक्षों की यत्न के साथ परीक्षा करने वाला, सौंपे गए कर्तव्य का ठीक-ठीक पालन करने वालों को उचित दान-मान से उत्साहित करने वाला, दैवी और मानुषी आपत्तियों का तुरन्त निवारण करने वाला, (राजोचित) छः गुणों (सन्धि, विग्रह, यान, आसन, द्वैध और आश्रय) के प्रयोग में कुशल, चारों वर्णों (ब्राह्मण, क्षत्रिय, वैश्य, शूद्र) की मनुनिर्दिष्ट मार्ग से व्यवस्था करने वाला और पवित्र यश वाला पुण्यवर्मा नाम का राजा था।

  

(३) श्रूयतामिति। जनपदो देशः, 'नीवृज्जनपदो देशविषयो तूपवर्तनम्' इत्यमरः। अंशेनैकदेशेन। अत्यन्तं सत्त्वं यस्येति। अतिसत्त्वो महाबलः। सत्त्व गुणो वा। वदान्यो बहुप्रदः, 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। विनीतो नम्रः। विनेता शिक्षाकर्ता। रञ्जिता अनुरागं प्रापिता भृत्याः सेवका येनेति। उदग्र उन्नतः। बुद्धिर्मतिः। मूर्तिः कायः। उत्थानशीलः पौरुषस्वभावः, 'उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च' इति विश्वः। शास्त्रमेव प्रमाणं यस्येति स तथा। शक्यभव्यकल्पारम्भी, 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम्। कल्पं युक्तं न भङ्गेन सदैवैष समाचरेत्॥' इति दिवाकरः। शक्यं स्वसाध्यम्। भव्यं कुशलम्, 'भावुकं भविकं भव्यं कुशलं क्षेमम्' इत्यमरः। कल्पो विधिः, 'कल्पो न्याय्ये विधौ शास्त्रे संवर्ते ब्रह्मवासरे। कल्पद्रुमे विकल्पे च'—इति महीपः। संभावयिता संभावना मानधनादिनेति ज्ञेयम्। एवं सर्वत्र। असंबद्धाः परस्परासंबद्धाः प्रलापा निरर्थकवचनानि, 'प्रलापोऽनर्थकं वचः' इत्यमरः। अदत्तकर्णः अश्रोतेत्यर्थः। अवितृष्णो न विगता तृष्णा यस्येति स तथा। नदीष्णो निपुणः, 'नदीष्णाभिज्ञनिष्ठ्यूतप्रवीणनिपुणा अपि' इति कोशः। नदीपूर्वात् स्नातेरातोऽनुपसर्गे कप्रत्ययः, 'निनदीभ्यां स्नातेः कौशले' (पा. ८।३।८९) इति मूर्धन्यादेशः। नेदिष्ठो निकटवर्ती, 'अन्तिकबाढयोर्नेद साधौ' (पा. ५।४।६३) इति साधु। प्रत्यवेक्षा गवेषणम्। कोशो भाण्डागारम्। वाहनान्यश्वादीनि। प्रतिकर्ता प्रतीकारकर्ता। षाड्गुण्यं षड्गुणाः चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्प्रत्ययः, 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः। चतुर्वर्णा एव चातुर्वर्ण्यम्। पुण्यश्लोकः पवित्रकीर्तिः, 'पद्ये यशसि च श्लोकः' इत्यमरः। पुण्यवर्मेति नाम राजा।

(४) स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्याद

  

तोऽभूत् । तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः, पितुरस्य बहुमतः, प्रगल्भवागभाषत—

(४) वह अपने पुण्य कर्मों के कारण पुरुष की आयु (१०० वर्ष) जीवित रह कर अपने पाप के कारण ही देवताओं में गिना गया (अर्थात् मर गया)। इसके वाद उस पुण्यवर्मा से प्रभाव प्राप्त करने वाला, उसका पुत्र अनन्तवर्मा पृथ्वी का शासक बना। वह सब गुणों से भरा हुआ होने पर भी दुर्भाग्यवश राजनीति में अधिक आदर (रुचि) नहीं रखता था। एक वार इसके पिता द्वारा अतिसंमानित, पटुभाषी, वृद्धमंत्री वसुरक्षित ने एकान्त में उस (अनन्तवर्मा) से कहा—

(४) स इति। प्राप्य, जीवित्वेत्यर्थः। पुरुषायुषं पूर्णमायुर्वर्षशतमितम्। अपुण्येन, पापेनेत्यर्थः। अगण्यत, 'गण संख्याने'। अमरेषु देवेषु। तदनन्तरम्, पुण्यवर्मोत्तरमित्यर्थः। अनन्तवर्मेति। तदायतिस्तस्मात्पुण्यवर्मण आयतिः प्रभावो यस्येति स तथा, 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः। दैवाददृष्टात्। दण्डनीत्यां राजनीत्याम्। रहस्येकान्ते। प्रगल्भा प्रौढा वाक् यस्येति स तथा।

(५) 'तात! सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्रभवति लक्ष्यते। बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तरा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिशून्यो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम्। अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः। निर्मर्यादश्च

लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते। आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्। अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम्। तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम्' इति।

(५) 'तात, उच्च कुल में जन्म से लेकर जितने भी मनुष्य के गुण हैं, वे सबके सब पूरे के पूरे आप में दिखाई देते हैं। आपकी सहज-कुशल बुद्धि, कलाओं में, नृत्य-गीतादि में, चित्रों में, काव्य-रचनाओं में विकास पाती हुई, दूसरों से कहीं बढ़ कर है। फिर भी अर्थशास्त्र (राजनीति) के अध्ययन से न सँवारी गई यह (आप की) बुद्धि, आग में शुद्ध न किए गए सोने की भाँति, चमकती नहीं है। क्योंकि बुद्धिहीन राजा, चाहें कितना भी उन्नत हो, शत्रुओं से आक्रमण होने पर अपने को चेत नहीं कर पाता और न शत्रु और सहायक (या कार्य और कारण) में अन्तर रख कर व्यवहार कर पाता है। काम उल्टा-सीधा करने से असफल होता है और अपने लोगों तथा शत्रुओं से पराजय पाता है। जिस की कोई बात नहीं मानता, ऐसे राजा की आज्ञा प्रजा के योग (अलभ्य वस्तु का लाभ) और क्षेम (लब्ध वस्तु की रक्षा) की रक्षा करने में असमर्थ होती है। और जब प्रजा राजा की आज्ञा का उल्लंघन करती है, तो जो कुछ मन में आता है बोलती है, जैसा चाहती है वैसा व्यवहार करती है और राज्य की सारी व्यवस्था बिगाड़ देती है। और मर्यादा तोड़ने वाली प्रजा अपने आप को और अपने स्वामी को इस लोक में तथा परलोक में भी विनष्ट कर देती है। शास्त्र-रूपी दीप के द्वारा देखे गए मार्ग से लोक-यात्रा सुख-

पूर्वक होती है। शास्त्र ऐसा दिव्य नेत्र है जिसकी गति भूत, वर्तमान और भविष्यत् काल में, तथा छिपी हुई तथा दूर रहने वाली वस्तुओं में भी नहीं रुकती। उसके बिना चौड़े और बड़े नेत्रों के होते हुए भी राजा, राजनैतिक उद्देश्यों को देखने में असमर्थ होने के कारण, अन्धा ही है। इसलिए बाहर की विद्याओं में आसक्ति छोड़ कर राजनीति को समझो जो तुम्हारी कुल-विद्या है। इसको व्यवहार में लाने से शक्ति और सिद्धि को प्राप्त करके समुद्ररूपी मेखला (तडागी) वाली पृथ्वी पर चिरकाल तक ऐसे शासन करो जिससे कोई तुम्हारी आज्ञा को टाल न सके।'

(५) तातेति संबोधनम्। अभिजनात् 'कुलान्यभिजनान्वयौ' इत्यमरः। अतिशयेन पटुः पटवी। विस्तरो विस्तृतत्वम्। इतरेभ्योऽन्येभ्यः। प्रतिविशिष्यते, विशिष्टा भवतीत्यर्थः। तथापीति। हेमजातिः सुवर्णजातिः। बुद्धिशून्यो बुद्धिहीनः। अत्युच्छ्रितोऽपि महानपि। परैः शत्रुभिः। अध्यारुह्यमाणमासाद्यमानम्। न चेतयते, विना संज्ञानेन स्मारयत इत्यर्थः। साध्यं कार्यम्। साधनं कारणम्। कर्मसु कार्येषु। स्वैरात्मीयैः। परिभूयते पराभवं प्राप्यते। अवज्ञातस्यावगणितस्य। योगोऽलभ्यलाभः। क्षेमं लब्धसंरक्षणम्। 'अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम्। द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः॥' इति। इतो लोकादिहलोकात्। अमुतः परलोकात्। भ्रंशयते पातयति। आगम एव दीपस्तेन दृष्टेन। अध्वना मार्गेण। लोकयात्रा लोकस्थितिः। अप्रतिहतवृत्ति न प्रतिहता कुण्ठिता वृत्तिर्यस्येति। तेन, शास्त्रचक्षुषेत्यर्थः। हीनो रहितः। सतोविद्यमानयोः। विशालयोर्महतोः। बाह्यविद्यास्वितरविद्यासु। अभिषङ्गं सङ्गम्, 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती। आगमय, प्रापयेत्यर्थः। तदर्थानुष्ठानेन, कुलविद्यानुष्ठानेनेत्यर्थः। आवर्जिता प्राप्ता। अस्खलितशासनोऽहताज्ञः। शाधि शिक्षय। 'शासु अनुशिष्टौ॥

(६) एतदाकर्ण्य 'स्थान एव गुरुभिरनुशिष्टम्। तथा क्रियते'

इत्यन्तःपुरमविशत् । तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गे नोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसाद-वित्तो गीतनृत्यवाद्यादिष्वबाह्यो बाह्यनारीपरायणः पटुरयन्त्रित-मुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञापयत्—

(६) यह सुनकर 'गुरुओं ने ठीक ही सिखाया है; वैसा ही होगा' (यह कह कर राजा) रनवास में चला गया। राजा के द्वारा रानियों की उपस्थिति में प्रसङ्गवश कही हुई उस बात को सुन कर, पास बैठा हुआ, मन के भाव समझने में चतुर, तथा राजा का अनुग्रह पाने के कारण प्रसिद्ध, गीत-नृत्य और वाद्यों (बजाये जाने वाले यंत्र, जैसे मृदङ्ग-वीणा आदि) में निपुण, नारी-लम्पट, चतुर, जो मुँह में आये कहने वाला, अनेक वक्रोक्तियों में कुशल, दूसरों के मर्म (गुप्त रहस्य) को समझने में प्रवीण, हँसाने वाला, निन्दा फैलाने में रुचि रखने वाला, चुगली अथवा ठगी में घुटा हुआ, मंत्रियों से भी रिश्वत ले लेने वाला, सब बुरे कार्यों का अध्यापक, काम-शास्त्र का नाविक (नौका खेने वाला), बाल्यावस्था से ही राजा का सेवक, वह विहारभद्र, मुस्कराते हुए, राजा से कहने लगा—

(६) एतदिति । स्थाने, युक्तमित्यर्थः । अनुशिष्टमुपदिष्टम् । चित्तानुवृत्तिर्मनोगतं तत्र कुशलः । प्रसादवित्तो राजप्रसादेन ख्यातः । गीतं गानम् । नृत्यं नर्तनम् । वाद्यं चतुर्विधम् । अबाह्योऽभिन्नः, तन्मय इति भावः । अयन्त्रितमुखोऽनियतमुखः, बहुभाषीत्यर्थः । 'भङ्गी स्याद्वक्र-भाषितम्' इति वैजयन्ती । परमर्म परगोप्यम् । परिवादो निन्दा । उत्कोचो गुप्तद्रव्यादिग्रहणम् । दुर्नयानामुपाध्यायोऽध्यापकः । कामतन्त्रे कामशास्त्रे । कर्णधारो नाविकः । कुमारसेवकः कुमारावस्थायाः प्रभृति सेवकः ।

  

(७) देव ! दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेः, तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः । तथा हि—केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरः, बद्ध्वा दर्भरज्जुभिः, अजिनेनाच्छाद्य, नवनीतेनोपलिप्य, अनशनं च शाययित्वा, सर्वस्वं स्वीकरिष्यन्ति । तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति । यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत् । तमन्ये परिवार्याहुः—'एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्रादृते सर्वशत्रून्घातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति ।

(७) 'हे स्वामी, यदि भाग्य की कृपा से कोई ऐश्वर्य का अधिकारी हो जाता है, तो धूर्त लोग उसे तरह-तरह के प्रलोभनों से पीड़ित करते हुए अपना स्वार्थ सिद्ध करते हैं। जैसे—कुछ (धूर्त), मृत्यु के बाद प्राप्त होने वाले बढ़े-चढ़े अभ्युदय (समृद्धि) की आशा दिला कर (अपने शिकार का) सिर मूँड कर, (उसे) दाभ की रस्सियों से बांध कर, चमड़े से ढक कर (पहना कर) मक्खन से लीप कर, भूखे ही सुला कर (उसका) सर्वस्व हड़प लेते हैं। इनसे भी कहीं बढ़ कर बहुत बुरे पाषण्डी वे होते हैं जो (राजा को) पुत्र, पत्नी, शरीर यहाँ तक कि जीवन से भी छुड़वा देते हैं। यदि कोई बहुत चतुर हो, और (उनके द्वारा दिखाई) मृगतृष्णा में न फँस कर अपने हाथ (अधिकार) में आई (सम्पत्ति) को छोड़ना न चाहे, तब दूसरे (धूर्त) उसे घेर कर यों कहते हैं—यदि कोई हमारे द्वारा बताये मार्ग पर चलता है, तो हम (उसके लिए) एक काकिणी का एक लाख सिक्का बना दें, शस्त्र के बिना ही, सब शत्रुओं

को मरवा दें, अकेले तथा असहाय मरणशील मनुष्य को भी चक्रवर्ती सम्राट् बना दें।

(७) कदर्थयन्तो निन्दन्तः। तथा हीति। प्रेत्य जन्मान्तरे, 'प्रेत्यामुत्र भवान्तरे' इत्यमरः। किलेत्यलीके। अजिनेन चर्मणा। अनशनं निराहारम्। पाषण्डिनो शास्त्रविरुद्धाचाराः, सर्वतोभ्रष्टा इत्यर्थः। पटुजातीयः। 'प्रकारवचने जातीयर्' (पा. ५।३।६९)। कार्षापणम् 'कार्षापणः कार्षिके स्यात्पणषोडशकेऽपि च' इति विश्वः। एकशरीरिणम् । एकाकिनमित्यर्थः। मर्त्यं चक्रवर्तिनं मनुष्यसमूहर्वातनम्। आचर्यते, आचरतीत्यर्थः।

(८) पुनरिमान्प्रत्याह—'कोऽसौ मार्गः ?' इति। पुनरिमे ब्रुवते—नन चतस्रो राजविद्याः, त्रयी वार्ताऽऽन्वीक्षिकी दण्डनीतिरिति। तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च। तास्तावदासताम्। अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स 'तथा' इत्यधीते शृणोति च। तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि। सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते। इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम्

(८) जब वह (राजा) इन (धूर्तों) से पूछता है 'वह कौन सा मार्ग है ?' तब ये फिर कहते हैं—'चार राजविद्याएँ हैं। तीन वेद, वार्ता (कृषि और व्यापार) आन्वीक्षिकी (तर्क और आत्मतत्त्वविद्या) और राजनीति। इनमें तीन—त्रयी, वार्ता और आन्वीक्षिकी तो बड़ी हैं और देर में धीरे-

  

धीरे फल देने वाली हैं। उन्हें तो रहने दो। राजनीति को पढ़ो। यह आचार्य विष्णुगुप्त ने मौर्य के लिए छः हजार श्लोकों में लिखी है। उसे ही पढ़कर अच्छी तरह व्यवहार में लाई हुई (वह राजनीति) यथेच्छ फल दे सकती है। वह (राजा) उनकी बात मान कर, उसे (दण्डनीति को) पढ़ता है और सुनता है। पढ़ते-सुनते ही बूढ़ा हो जाता है। वह शास्त्र तो दूसरे शास्त्र से जुड़ा हुआ है। जब तक सारा वाङ्मय नहीं जाना जाता, तब तक कुछ भी अच्छी तरह (पूरी तरह) समझ में नहीं आता। बहुत या थोड़े समय में उसके अर्थ का ज्ञान भी हो जाए, तो शास्त्रज्ञान हो जाने पर सबसे पहली शिक्षा यह है कि पुत्र और पत्नी पर भी विश्वास नहीं करना चाहिए। अपना पेट भरने के बारे में शिक्षा है कि इतने चावलों से इतना भात बनता है। इतने भात के पाक के लिए इतना इन्धन बहुत काफी है। अतः (सब-कुछ) पहले तोल कर और माप कर देना चाहिए।

(८) अधीष्व, अङ्गीकुर्वित्यर्थः। चन्द्रगुप्तमौर्यो राजा। वाङ्मयं वाग्जालम्। समूहार्थे मयट्। 'तुलावच्छेद उन्मानो मानः प्रस्थादिभिः कृतः' इति वैजयन्ती।

(९) उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्धमुष्टिं वाऽभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम्। शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताः। चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्धचैव ते विकल्पयितारः। द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रोशाद् दह्यमानकर्णः कष्टं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः पापेनाकीर्त्या च भर्तारमात्मानं चार्थैर्योजयन्ति।

(९) (राजा की दिनचर्या के विषय में ये नियम हैं।) उठ कर (जाग कर) राजा को, मुँह धोया हो या न धोया हो, मुष्टि (देश की आय-व्यय

की देखभाल) और अर्धमुष्टि (ग्राम की देखभाल) की जाँच-पड़ताल करके [अथवा मुष्टि (जनपद की आय-व्यय का लेखा-जोखा करने वाला अधिकारी) और अर्धमुष्टि (ग्राम की आय-व्यय का लेखा-जोखा करने वाला वैसा ही अधिकारी) को अपने विश्वास में लाकर], दिन के पहले या आठवें भाग में, सासे आय-व्यय का ब्योरा सुनना चाहिए। इस प्रकार राजा के हिसाब-किताब पर ध्यान रखते रहने पर भी, ये धूर्त अध्यक्ष (आय-व्यय के अधिकारी) दुगना हड़प लेते हैं। चाणक्य के द्वारा बताये गए चालीस कपट (ठगी) के उपायों को, ये धूर्त राजसेवक अपनी बुद्धि से ही हजार गुना बढ़ा लेते हैं। दूसरे (घंटे) में, परस्पर झगड़ती हुई प्रजा के झगड़े सुनने के कारण कर्ण-पीड़ा से व्याकुल राजा दुःखपूर्वक जीता है। ऐसा होने पर भी न्यायाधीश आदि अपनी इच्छा से (झगड़ों में) जीत या हार का निर्णय देते हुए, अपने स्वामी के माथे पाप और निन्दा मढ़ते हैं; और अपने को धन से मालामाल कर लेते हैं।

(९) मुष्टयर्धमुष्टी परिमाणविशेषौ। आक्रोशात्। 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्। तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति' इत्यमरः। ते प्राड्विवाकाः।

(१०) तृतीये स्नातुं भोक्तुं च लभते। भुक्तस्य यावदन्धः-परिणामस्तावदस्य विषभयं न शाम्यत्येव। चतुर्थे हिरण्यप्रति-ग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्त-मायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथः संभूय, दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्या-वस्थाश्च स्वेच्छया विपरिवर्तयन्तः, स्वपरमित्रमण्डलान्युप-जीवन्ति। बाह्याभ्यन्तरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति।

(१०) तीसरे में उसे नहाने और भोजन करने का अवसर मिलता

  

है। जब तक खाया हुआ भोजन पचता है, तब तक (भोजन में) विष मिलने का भय शान्त नहीं होता है। चौथे में स्वर्ण (राजस्व) लेने के लिए हाथ फैलाता हुआ ही उठता है। पाँचवें में मन्त्र (मन्त्रियों के साथ विचार विमर्श) की चिन्ता के कारण अत्यधिक कष्ट अनुभव करता है। फिर भी (राजा के) मन्त्री मध्यस्थ (वकील) के समान आपस में साँठ-गाँठ करके, दोष और गुणों को, दूतों (सेवकों) और चारों (गुप्त-चरों) के वाक्यों को, सम्भव और असम्भव को, देश, काल, कार्य और अवस्था को, अपनी इच्छा से तोड़ते मरोड़ते हुए, स्व-मण्डल, शत्रु-मण्डल और मित्र-मण्डल से भी स्वार्थ साधे विना नहीं चूकते। बाह्य (राजा से सीधा सम्बन्ध न रखने वाले जैसे सीमावर्ती राज्य के लोग), आभ्यन्तर (राजा से साक्षात् सम्बन्धित व्यक्ति जैसे, मंत्री, सेनापति आदि) के क्रोध को चुपचाप भड़का कर फिर सबके सामने मानो उसे शान्त करने का स्वाँग भरते हुए ये धूर्त अपने स्वामी को लाचार बना कर उसे अपने चंगुल में कर लेते हैं।

(१०) अन्धःपरिणाम ओदनपरिपाकः। महान्तमायासं क्लेशम्। संभूय मिलित्वा। दूताः सेवकाः। चारा गूढदूताः। स्वपरमित्राणां मण्डलम्। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यत इति परिभाषया स्वमण्डलं परमण्डलं मित्रमण्डलं वेत्यर्थः। प्रशमयन्तः शान्तिं प्रापयन्तः।

(११) षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः। सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः। सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः। अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः। पुनरुपास्यैव संध्याम्, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः। तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः। द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत।

 

(११) छठे में मनचाहे मनोरंजन या मंत्र का सेवन करना चाहिए। इसके मनचाहे मनोरंजन के लिए समय वस इतना ही है जितना तीन पाद (चौथाई) अधिक तीन नाडिकाएँ (३¾)। सातवें में चार अङ्गों वाली सेना के निरीक्षण का कष्टदायक कार्य करना पड़ता है। आठवें में सेनापतियों के साथ (विजय की) पराक्रम-साध्य योजनाओं की चिन्ता का कष्ट सताता है। फिर सन्ध्या के कर्तव्यों से निवृत्त होकर, रात के पहले भाग में अपने गुप्तचरों से मिलना पड़ता है। और उनके द्वारा अत्यन्त निर्दय, शस्त्र-मारक, अग्निदाहक और विषदायक (हत्या करने वाले) गुप्त दूतों को उनके काम वताना होता है। दूसरे में, भोजन के वाद ब्राह्मण के समान स्वाध्याय आरम्भ करना होता है।

**(११) नृशंसा घातुकाः। शस्त्रप्रणिधिः शस्त्रमारकः। अग्निप्रणिधिरग्निदायकः। रसप्रणिधिर्विषदायकः, 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति मेदिनी।**

**(१२) तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल। कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत्। पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च। दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वणिज्यया वर्धयन्तः, कार्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति।**

(१२) तीसरे में तूर्य के शब्द से सुलाया गया राजा चौथे और पाँचवें में सोये। परन्तु निरन्तर चिन्ता के कष्ट से व्याकुल मन वाले इस बेचारे को नींद का सुख कैसे मिल सकता है? फिर छठे में, शास्त्र की चिन्ता और कार्य की चिन्ता आरम्भ हो जाती है। सातवें में मंत्रियों से विचार-विमर्श और दूतों को उनके कार्य पर नियुक्त करना होता है। ये दूत चापलूसी भरे वचनों से, दोनों ओर से मिले हुए धन को 'यह राजकीय धन है, यह

  

कहकर महसूल की अड़चन से छुटे हुए उपायों से, व्यापार के द्वारा बढ़ाते हुए, चाहे कोई काम (करने के लिए) न भी हो, फिर भी जैसे-तैसे (काम) का बहाना ढूँढ़ कर, निरन्तर घूमते हैं।

(१२) संविष्टः कृतशयनः, 'संवेशः शयने स्थाने सत्समारोहणेऽपि च' इत्यजयः। अजस्रं निरन्तरम् 'नित्यानवरताजस्रम्' इत्यमरः। विह्वलमनसो व्याकुलचित्तस्य। शास्त्रचिन्ता कार्यचिन्ता चेति। वीता शुल्कबाधा यत्रेति क्रियाविशेषणम्। वणिज्यया वणिक्कर्मणा। अनवरतं निरन्तरम्।

(१३) अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः। दुःस्था ग्रहाः। शकुनानि चाशुभानि। शान्तयः क्रियन्ताम्। सर्वमस्तु सौवर्णमेव होमसाधनम्। एवं सति कर्म गुणवद्भवति। ब्रह्मकल्पा इमे ब्राह्मणाः। कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति ते चामी कष्टदारिद्र्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः। दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति।

(१३) आठवें में पुरोहित आदि पास आकर इसे कहते हैं— 'आज बुरा स्वप्न देखा है। ग्रहों की स्थिति ठीक नहीं है। और शकुन अशुभ हैं। (इनका कुफल दूर करने के लिए) शान्ति के कार्य करवाये जाएँ। यज्ञ के सभी साधन सोने के ही (बने) हों, ऐसा करने पर (यज्ञ) कर्म सफल होता है। ये ब्राह्मण ब्रह्मा का रूप हैं। इनके द्वारा किया गया स्वस्त्ययन (मंगल-मंत्रों का उच्चारण) अधिक कल्याणकारक होगा। और ये ब्राह्मण निर्धनता से पीड़ित, बहुत सन्तान वाले, यज्ञ करने में लगे हुए वीर्य (ब्रह्म-तेज) वाले हैं और फिर भी इन्हें प्रतिग्रह (दान आदि) नहीं मिला है। इन्हें दिया हुआ (धन) स्वर्ग को ले जाने वाला,

  

दीर्घ आयु देने वाला, और अरिष्ट (पाप) नाश करने वाला होता है। ऐसा कह कर उन्हें खूब-खूब (धन) दिलवा कर उनके बहाने से स्वयं चोरी-छिपे खाते हैं।

(१३) अभ्येत्यैकीभूत्वा । गुणवत्सार्थकम् । ब्रह्मकल्पा ब्रह्मण ईषन्न्यूनाः । स्वस्त्ययनं क्षेमप्रमाणम् । उपांश्वेकान्ते ।

(१४) तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरल-कदर्थनं च नयतो नयज्ञस्यास्तां चक्रवर्तिता, स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत्। शास्त्रज्ञसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता जन्मभूमिरलक्ष्म्याः । यावता च नयेन विना याति लोकयात्रा स लोकत एव सिद्धः । नात्र शास्त्रेणार्थः । स्तनंधयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते । तदपास्यातियन्त्रणा-मनुभूयन्तां यथेष्टमिन्द्रियसुखानि ।

(१४) इस प्रकार रात-दिन सुख का लेश पाये विना, कष्ट से भरपूर, और निरन्तर कदर्थना (पीड़ा) से व्याकुल जीवन व्यतीत करते हुए दण्डनीति को जानने वाले इस राजा का चक्रवर्ती होना तो दूर रहा, केवल अपने मण्डल (राज्य) की रक्षा करना भी अत्यन्त कठिन हो जाता है। शास्त्रज्ञ (दण्डनीति के शास्त्र को जानने वाला) के द्वारा अनुशासित ऐसा राजा जो कुछ देता है, जिस किसी का आदर करता है, जिस (किसी) से प्रिय वचन बोलता है, वह सब ठगने के लिए है, ऐसा समझते हुए लोग राजा पर अविश्वास करते हैं। विश्वास का चला जाना ही अलक्ष्मी (विपत्ति) की जन्मभूमि है। अपने साधारण जीवन के अनुभव से ही जाना जा सकता है कि दण्डनीति (को जाने) बिना भी कहाँ तक जीवन-यात्रा चलती है। इस विषय में शास्त्र से क्या लेना-देना। (माता का) स्तन चूसने वाला नन्हा शिशु भी अपने आप (बिना सिखाये) माता का स्तन

  

चूस लेता है। अतः सब प्रकार के नियंत्रणों (यह करो, यह न करो) से छुटकारा पाकर, जैसा चाहो वैसे, इन्द्रियों के सुखों का आनन्द लूटो।

(१४) चक्रवर्तिता राष्ट्रव्यापकता। जन्मभूमिरुत्पत्तिस्थानम्।

(१५) येऽप्युपदिशन्ति—'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिबकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते। के चैते वराकाः। येऽपि मन्त्रिकर्कशास्तन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम्?। तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी। पठन्तश्चापठद्भिरतिसंधीयमाना बहवः।

(१५) और जो (ऐसा) उपदेश देते हैं—'इस प्रकार इन्द्रियों को जीतना चाहिए, और छः शत्रुओं (काम, क्रोध, लोभ, मोह, मद, मात्सर्य) के समूह का परित्याग करना चाहिए, और अपनों में और परायों में निरन्तर, सामादि (साम, दान, दण्ड, भेद) नीति के उपायों का प्रयोग करना चाहिए, सन्धि और विग्रह (युद्ध) की चिन्ता करते हुए समय बिताना चाहिए, सुख (भोगने) के लिए थोड़ा-सा भी समय नहीं देना चाहिए; वे नीच मंत्री भी आप से चोरी से ठगा हुआ धन वेश्याओं के घरों में ही भोगते हैं। क्या हैं ये बेचारे! और जो मन्त्र (के निर्वाह) में अत्यन्त कठोर शुक्र, आङ्गिरस, विशाल, अक्षबाहु, दन्तिपुत्र, पराशर आदि दण्डनीति के बनाने वाले नीतिज्ञ हुए हैं, क्या उन्होंने छः शत्रुओं को जीता था? क्या उन्होंने शास्त्रों के (निर्देश) का पालन किया था? उन्होंने भी प्रारम्भ किये हुए कार्यों में

  

सफलता और असफलता देखीं। शास्त्र पढ़ने वाले वहुत-से (लोग), शास्त्र न पढ़ने वालों से ठगे जाते हैं।

(१५) अरिषड्वर्गः कामक्रोधलोभमोहमदमात्सर्याणि। सामादिरुपायाः (नयवर्गः), 'सामदाने भेददण्डावित्युपायचतुष्टयम्' इत्यमरः। मन्त्रिबकैर्मन्त्रिकुत्सितैः। 'कुत्सितानि कुत्सनैः' (पा. २।१।५३) इति समासः। 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिचरो द्विजः' (४।१९६) इति मनुः। मन्त्रकर्कशा मन्त्रकठिनाः। तन्त्रकर्तारः कर्मकर्तारः। प्रारब्धेष्वारम्भितेषु।

(१६) नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिः, अयातयामं वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः। तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेनैव मा कृथा वृथा। सन्ति हि ते दन्तिनां दश सहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि। सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्याप्तं यदन्यार्जितायायासः क्रियते?

(१६) आप में ये सब (बातें)—जैसे ऐसी जाति जिस की सारा लोक वन्दना करता है, नई खिलती जवानी और अपरिमित धन-सम्पत्ति—विद्यमान ही हैं। इन सबको, तन्त्रावाप (नीति-विचार) से, जो सब प्रकार के अविश्वास का कारण है, जो सुख के भोगों में बाधक है, और जिसमें अनेक उपायों (चालों) की (दिनरात) चिन्ता से सब कामों में बराबर सन्देह बना रहता है, निरर्थक मत बनाओ! तुम्हारे पास निश्चय ही दस हजार हाथी, तीन लाख घोड़े और अनन्त प्यादे सैनिक हैं।

  

इसके अतिरिक्त सोने और रत्नों से (तुम्हारे) कोशगृह (खजाने) भरे ही हैं। यह सारा जीवलोक (तुम्हारी सारी प्रजा) एक हजार युग तक (आप के) कोश को भोगे, फिर भी वह खाली नहीं होगा। क्या यह थोड़ा है जो आप और अधिक जोड़ने के लिए कष्ट कर रहे हैं?

---

(१६) अयातयाममजीर्णम्, नवमित्यर्थः। अपरिमाणेयत्तारहिता। विभूतिरैश्वर्यम्। तन्त्रावापेन 'तन्त्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरि-चिन्तनम्' इति। सन्तीति क्रियापदम्। हीति निश्चये। त इति। तवेत्यर्थः। पादातं पत्तिसंहतिः। कोशगृहाणि भाण्डागाराणि। कोष्ठा-गाराणि धान्यसंचयगृहाणि, 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इति कोशः। अन्यार्जितं परकीयम्।

(१७) जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि। तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम्। अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते। नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते। किं बहुना, राज्यभारं भारक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य, अप्सरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपान-गोष्ठीश्च यथर्तु बध्नन्यथार्हं कुरु शरीरलाभम्' इति पञ्चाङ्गी-मृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत। प्राहसीच्च प्रीतिफुल्ल-लोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितम्—'उत्तिष्ठ, ननु हितोपदेशाद्गुरवो भवन्तः। किमिति गुरुत्वविपरीतमनुष्ठि-तम्?' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्।

(१७) निश्चय ही जन्मधारियों का जीवन चार-पाँच दिन है। उसमें भी वह आयु का भाग, जो (विषयों) के भोग के योग्य है, बहुत थोड़ा है। वे मूर्ख हैं, जो धन कमाते-कमाते ढल जाते हैं और कमाये हुए धन का अंश मात्र भी भोगना नहीं चाहते। अधिक क्या

  

कहूँ—भार उठाने में समर्थ, विश्वसनीय, श्रद्धालु (मंत्रियों) के राज्य का भार सौंप कर, अप्सराओं जैसी (सुन्दर) स्त्रियों से रमण (भोग) करते हुए, ऋतु (मौसम) के अनुसार गीतसभा, संगीत-सभा, और (मदिरा) पान की सभाओं का आनन्द लूटते हुए, अधिक से अधिक इस (नश्वर) शरीर का लाभ उठाओ' ऐसा कह कर अपने पाँचों अंगों [घुटने (२) बाहें (२) मस्तक (१) ] से पृथ्वी को स्पर्श करते हुए (प्रणाम करके), अञ्जलि (जुड़े हुए हाथों) को सिर पर रखे हुए, देर तक लेटा रहा। (उसे देख कर) प्रसन्नता से खिले हुए नेत्रों वाली रनवास की स्त्रियाँ खूब हँसीं। प्रजा का स्वामी मुस्कराते हुए "उठो, निश्चय ही हित (भलाई) का उपदेश देने से आप (हमारे) गुरु हैं। यह क्या गुरु के (आचरण) से उल्टा व्यवहार (आपने) किया ?" ऐसा कह कर उसे (भूमि से) उठा कर फिर खूब मनोरंजन में लग गया।

(१७) वयःखण्डमायुष्यलेशम्। अपण्डिता नीचजनाः। अन्तःपुरिकाभिः स्त्रीभिः। यथार्हम्। वीप्सायां यथाशब्दः। पञ्चाङ्गी पञ्चानामङ्गानां समाहारस्तथा 'द्विगोः' (पा. ४।१।२१) इति ङीप्। 'जानू बाहुद्वयं मूर्धा पञ्चाङ्गम्' इत्युत्पलिनी। अञ्जलिना चुम्बितः स्पृष्टश्चूडो मौलिर्येनेति तथा।

(१८) अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान्। अथैवं मन्त्रिणो मनस्यभूत—"अहो मे मोहाद्बालिश्यम्। अरुचितेऽर्थे चोदयन्नर्थी-वाक्षिगतोऽहमस्य हास्यो जातः। स्पष्टमस्य चेष्टानामायथा-पूर्व्यम्। तथा हि—न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तूनि प्रेषयति, न मत्सुकृतानि

 

**प्रगणयति, न मे गृहवार्तां पृच्छति, न मत्पक्ष्यान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति ।**

(१८) इसके बाद राजा बूढ़े मंत्री के द्वारा कर्तव्य करने के लिए प्रतिदिन बार-बार प्रेरित किये जाने पर भी, केवल वाणी से तो उसकी बात मान कर, परन्तु मन से 'यह मेरे मन की बात नहीं समझता' ऐसा विचार कर, उसकी उपेक्षा करता था। ऐसा होने पर मंत्री के मन में ऐसा (विचार) आया—'ओह ! मोह के कारण मेरी मूर्खता ! इस (राजा) के मन को न भाने वाले कार्यों की ओर इसे प्रेरित करता हुआ मैं, आँखों में खटकने वाले याचक की तरह, इसकी हँसी का विषय बना। यह स्पष्ट है कि इसका मेरे प्रति व्यवहार पहले जैसा नहीं रहा है। जैसे—मुझे स्नेहभरी दृष्टि से नहीं देखता। मुस्कराहट के साथ नहीं बोलता, गुप्त बातों को (मुझ पर विश्वासकर के) प्रकट नहीं करता। (प्रेम से) मुझसे हाथ नहीं मिलाता, मेरे दुःख के दिनों में मेरे प्रति सहानुभूति प्रकट नहीं करता, उत्सवों में मुझ पर अपना अनुग्रह नहीं दिखाता, मुझे आकर्षक वस्तुएँ (उपहार-रूप में) नहीं भेजता, मेरे अच्छे कार्यों की परवाह नहीं करता, मेरे परिवार की (कुशल-क्षेम) की बात नहीं पूछता, मेरे पक्ष के लोगों को आदर से नहीं देखता, अपने गुप्त कार्यों में मुझे अपने विश्वास में नहीं लाता, मुझे रनवास में नहीं भिजवाता।

(१८) अथेति। भूयोभूयो वारंवारम्। प्रस्तुतेऽर्थे प्रकृतकार्ये। मन्त्रिणः प्रधानस्य। अक्षिगतो द्वेष्यः, 'द्वेष्योऽक्षिगत उच्यते' इति हलायुधः। विलोभनवस्तु दानवस्तु। मत्पक्ष्यान्मदीयपक्षवर्तिनः।

**(१९) अपि च, मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हयति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहि-**

तानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति ।

(१९) परन्तु इसके विपरीत, मुझे (मेरे लिए) अनुचित कार्यों में लगाता है, दूसरों के द्वारा मेरा आसन (कुर्सी) ग्रहण कर लेने पर बुरा नहीं मानता, मेरे शत्रुओं पर विश्वास दिखाता है, मेरी कही (वात) का उत्तर नहीं देता । मेरे समान दोष वालों को बुरा वताता है। मेरे मर्म (हृदय के कोमल स्थान) को दुखाने वाली हँसी से मुझ पर हँसता है । उसका अपना मत भी, यदि मेरे द्वारा वताया जाय, तो वह उसे काट देता है। मेरे द्वारा भेजी गई वहुत कीमती वस्तुओं को प्रसन्नता से स्वीकार नहीं करता। राजनीतिज्ञों की भूलों को मेरे सामने मूर्खों के द्वारा प्रकट करवाता है ।

(१९) अवष्टभ्यमानं आक्रम्यमाणम् । विश्रम्भं विश्वासम् । प्रतिक्षिपति अवगणयति । महार्हाण्यमौल्यानि । नयज्ञानां नीतिविदाम् ।

(२०) सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रियाः स्युः। दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति । तथापि का गतिः ? । अवनीतोऽपि न परित्याज्यः पितृपैतामहैरस्मादृशैरयमधिपतिः । अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः ? सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम् । अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः । अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नोऽपि द्वेषः सद्वृत्तमस्मै न रोचयेत् । भवतु, भविता तावदनर्थः । स्तम्भितपिशुनजिह्वो यथाकथंचिदभ्रष्टपदस्तिष्ठेयम्' इति ।

(२०) चाणक्य ने ठीक कहा है—बुरे लोग भी यदि वे (राजा की)

  

चित्तवृत्ति को जान कर (अपने को वैसा ही ढाल लेते हैं) तो उसके प्यारे बन जाते हैं। दूसरी ओर अच्छे लोग भी, यदि वे राजा की चित्तवृत्ति को नहीं समझते, तो उसके बुरे बन जाते हैं। फिर भी क्या किया जाय! चाहे यह राजा कितना भी उद्दण्ड (अशिष्ट) क्यों न हो, फिर भी मैं तो इसके पिता-दादा तक की सेवा करता आया हूँ, अतः इसे छोड़ा नहीं जा सकता। चाहे मैं इसे न भी छोड़ूँ, फिर भी मैं इसका क्या भला कर सकता हूँ जब कि यह मेरी बात तक नहीं सुनता। निश्चय ही राजनीति के ज्ञाता, अश्मक (देश) के इन्द्र (राजा) के हाथों में यह राज्य जाने वाला है। संभव है, आने वाली विपतियाँ इसका दिमाग ठीक कर दें। विपत्तियाँ आने पर चाहे बुराइयों के प्रति इसके मन में घृणा हो जाय, पर फिर भी शायद इसे अच्छे आचार-व्यवहार (सुधार) का जीवन अच्छा न लगे। जो कुछ भी हो, विपत्ति सिर पर पड़ने वाली ही है। मैं शिक्षा देने के लिए अपना मुँह न खोल कर, जैसे-तैसे अपने पद को सँभाले रहूँगा।

(२०) चाणक्यो नीतिशास्त्रकर्ता। चित्तज्ञानमनुवर्तन्ते ते तथा। दक्षिणाः सरला अपि। तस्य चित्तस्य भावस्तद्भावस्तद्बहिष्कृताः। द्वेष्या वैरिणः। तथापीति। अविनीतोऽप्यत्युद्धतोऽपि। अपरित्यजन्त आश्रयन्तः। कमुपकारं प्रयोजनादिकम्। कर्मचयमित्यध्याहारः। किंविधा अश्रूयमाणवाचः। 'व्यलीकमपराधः स्यात्' इत्यमरः। स्तम्भिता स्तम्भं प्रापिता। 'पिशुनः सूचकः खलः' इति कोशः। अभ्रष्टपदोऽगताधिकारः।

(२१) एवंगते मन्त्रिणि, राजनि च कामवृत्ते, चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारणगणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छद्मांकिकरैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत्। अमुना चैव संक्रमेण राजन्यास्पदमलभत। लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत्।

गच्छति ।" इति शास्त्रवचनात् । तान् दण्ड्यानेव स्थित्यै लोकप्रतिष्ठ दण्डयतः शिक्षयतः । प्रसूतये सन्तानायैव परिणेतुर्दारान्परिगृह्णतः । म षिणो विदुषः दोषज्ञस्येति यावत् । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोवि बुधः । धीरो मनीषी' इत्यमरः । तस्य दिलीपस्यार्थकामावपि धर्म एव जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पा रूपधर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्त भूदित्यर्थः । आह च गौतमः—'न पूर्वाह्णमध्यदिनापराह्णानफलान्कु यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' इति ॥ २५ ॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥२६॥

अन्वय—सः यज्ञाय गां दुदोह; मघवा सस्याय दिवं "दुदोह" उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः ।

राजा दिलीप, यज्ञ करने के लिये पृथिवी को दुहता था, (अर्थात् प्र से कर लेकर यज्ञ करता था) और इन्द्र अन्न के लिये स्वर्ग को दुहता (अर्थात् वर्षा करके अन्न को बढ़ाता था) । इस प्रकार इन्द्र और दि आपस में अपनी अपनी सम्पत्ति का आदान-प्रदान करके दोनों भुवनों रक्षा करते थे ॥ २६ ॥

स राजा यज्ञाय यज्ञं कर्तुं गां भुवं दुदोह । करग्रहणेन रिक्तां चका त्यर्थः । मघवा देवेन्द्रः सस्याय सस्यं वर्धयितुं दिवं स्वर्गं दुदोह द्युलोकान्महीलोके वृष्टिमुत्पादयामासेत्यर्थः । 'क्रियार्थोपपदस्य०' इत्यादि यज्ञसस्याभ्यां चतुर्थी । एवमुभौ संपदो विनिमयेन परस्परं आदानप्र दानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञैरिन्द्रलोकमिन्द्रश्चोद भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ—'राजा त्वर्थान्समाहृत्य कुर्यादि महोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥' इति ॥ २६ ॥

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥२७॥

अन्वयः—राजानः रक्षितुः तस्य यशः न अनुययुः किल, यत्, तस्करता परस्वेभ्यः व्यावृत्ता 'सती' श्रुतौ स्थिता ।

(भय के कारणों से) उस रक्षक दिलीप के यश को कोई भी राजा न पा सका । क्योंकि उसके राज्य में 'चोरी' यह शब्द केवल सुनने में ही आता था, (अर्थात् दिलीप के राज्य में कोई किसी के धन का अपहरण नहीं करता था, इसलिए उसके यश की भी चोरी न हुई) ॥ २७ ॥

राजानोऽन्ये नृपा रक्षितुर्भयेभ्यस्त्रातुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु । कुतः ? यद्यस्मात्कारणात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता । अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः । अथवा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति, हि इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः ॥ २७ ॥

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥२८॥

अन्वयः—शिष्टः, द्वेष्यः अपि, आर्त्तस्य औषधं यथा, तस्य सम्मतः आसीत्, दुष्टः, प्रियः अपि, उरगक्षता अङ्गुलीव, "तस्य" त्याज्यः "आसीत्" ।

सज्जन पुरुष, शत्रु होते हुए भी दिलीप का वैसे ही प्रिय था जैसे रोगी को कड़वी औषधि; और दुष्ट मनुष्य प्रिय होते हुए भी वैसे ही त्याज्य था जैसे साँप से डसी अंगुली ॥ २८ ॥

शिष्टो जनो द्वेष्यः शत्रुरपि । आर्तस्य रोगिण औषधं यथौषधमिव । तस्य संमतोऽनुगत आसीत् । दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि ।

उरगक्षता सर्पदष्टांगुलीव । 'छिन्द्याद् बाहुमपि दुष्टमात्मनः' इति न्या त्याज्य आसीत् । तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः ॥ २८ ॥

तस्य परोपकारित्वमाह—

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥२९॥

अन्वयः—वेधाः तं महाभूतसमाधिना विदधे, नूनं, तथा हि सर्वे गुणाः परार्थैकफलाः आसन् ।

ब्रह्माजी ने जिस कारण-सामग्री से 'पृथिवी जल अग्नि वायु आ इन पच महाभूतों को वनाया, उसी कारण-सामग्री से महाराज दि को भी वनाया, यह निश्चित है, इसीलिये जैसे पंचभूतों के गुण दूसरों लिये ही हैं वैसे ही राजा दिलीप के सभी गुण भी दूसरों के ही लि ॥ २९ ॥

वेधाः स्रष्टा । 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । तं दिलीपम् । स घीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां यः समाधिस्तेन म भूतसमाधिना विदधे ससर्ज । नूनं ध्रुवम् । इत्युत्प्रेक्षा । तथा हि । त राज्ञः सर्वे गुणा रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनमेवैकं फलं येषां ते तथोक्ता आसन् । महाभूतगुणोपमानेन कारणगुणाः कार्ये मन्तीति न्यायः सूचितः ॥ २९ ॥

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥३०॥

अन्वयः—सः वेलावप्रवलयाम्, परिखीकृतसागराम्, अनन्यशासना उर्वीम्, एकपुरीम्, इव, शशास ।

उस दिलीप ने समुद्र के तटरूपी परकोटा वाली तथा साग 'चारों तरफ की खाईं' वाली, दूसरे राजा के शासन-रहित सारी पृ

चारों ओर दीवार (समुद्र)

का शासन बिना परिश्रम, इस प्रकार किया, जैसे कोई एक नगरी का शासन करता है ॥३०॥

स दिलीपः। वेलाः समुद्रकूलानि। 'वेला कूलेऽपि वारिधेः' इति विश्वः। ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम्। 'स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः' इत्यमरः। परितः खातं परिखा दुर्गवेष्टनम्। 'खातं खेयं तु परिखा' इत्यमरः। 'अन्येष्वपि दृश्यते' इत्यत्रापिशब्दात्खनेर्डप्रत्ययः। अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम्। अभूततद्भावे च्विः। अविद्यमानमन्यस्य राज्ञः शासनं यस्यास्तामनन्यशासनामुर्वीमेकपुरीमिव शशास। अनायासेन शासितवानित्यर्थः॥ ३० ॥

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥३१॥

अन्वयः—तस्य मगधवंशजा, दाक्षिण्यरूढेन नाम्ना अध्वरस्य दक्षिणा, पत्नी, इव, सुदक्षिणा इति, 'पत्नी' आसीत्।

राजा दिलीप की मगध कुल में उत्पन्न तथा राजा के चित्त का अनुसरण करने वाली सुदक्षिणा नाम से प्रसिद्ध पटरानी वैसी ही थी जैसी यज्ञ की पत्नी दक्षिणा॥ ३१ ॥

तस्य राज्ञो मगधवंशे जाता मगधवंशजा। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। एतेनाभिजात्यमुक्तम्। दाक्षिण्यं परच्छन्दानुवर्तनम्। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति शाश्वतः। तेन रूढं प्रसिद्धम्। तेन नाम्ना। अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाख्या पत्नीव सुदक्षिणेति प्रसिद्धा पत्न्यासीत्। अत्र श्रुतिः—'यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः' इति। दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम्। दक्षन्ते दक्षिणां प्रतिगृह्य' इति च॥ ३१ ॥

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥३२॥

अन्वयः—वसुधाधिपः, अवरोधे महति अपि, मनस्विन्या त लक्ष्म्या च, आत्मानं कलत्रवन्तं, मेने ।

चक्रवर्ती राजा दिलीप, अनेक रानियों के होते हुए भी, पति इच्छा का अनुसरण करने वाली सुदक्षिणा और राज्यलक्ष्मी से ही को स्त्री वाला मानते थे ॥ ३२ ॥

वसुधाधिपः । अवरोधेऽन्तःपुरवर्गे महति सत्यपि मनस्विन्या दृढ त्तया । परिचित्तानुवृत्त्यादिनिर्बन्धक्षमयेत्यर्थः । तया सुदक्षिणया लक्ष्म्या चात्मानं कलत्रवन्तं भार्यावन्तं मेने । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । वसु धाधिप इत्यनेन वसुधया चेति गम्यते ॥ ३२ ॥

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥३३॥

अन्वयः—सः आत्मानुरूपायां तस्याम्, आत्मजन्मसमुत्सुकः, विलम्बितफलैः मनोरथैः कालं निनाय ।

राजा दिलीप ने, अपने मनोनुकूल सुदक्षिणा में पुत्रोत्पत्ति की अभिलाषा से प्रतीक्षा करते हुए बहुत समय बिताया ॥ ३३ ॥

स राजा । आत्मानुरूपायां तस्याम् । आत्मनो जन्म यस्यासावात्म जन्मा पुत्रः । तस्मिन्समुत्सुकः । यद्वा । आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् 'आत्मा वै पुत्रनामासि' इति श्रुतेः । विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैर्मनोरथैः कदा मे पुत्रो भवेदित्याशाभिः कालं निनाय यापयामास ॥ ३३ ॥

संतानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥३४॥

अन्वयः—तेन सन्तानार्थाय विधये स्वभुजादवतारिता जगतः गुर्वी, धूः सचिवेषु निचिक्षिपे ।

पुत्र की प्राप्ति के निमित्त अनुष्ठान करने के लिये राजा दिलीप ने अपनी भुजाओं से उतारा हुआ प्रजापालन रूप राज्यभार मंत्रियों के ऊपर रख दिया, (अर्थात् कार्यभार मंत्रियों को सौंप दिया) ॥ ३४ ॥

तेन दिलीपेन । संतानोऽर्थः प्रयोजनं यस्य तस्मै संतानार्थाय विधयेऽनुष्ठानाय । स्वभुजादवतारितावरोपिता जगतो लोकस्य गुर्वी धूर्भारः सचिवेषु निचिक्षिपे निहिता ॥ ३४ ॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥३५॥

अन्वयः—अथ पुत्रकाम्यया प्रयतौ तौ दम्पती विधातारम् अभ्यर्च्य, गुरोः वसिष्ठस्य, आश्रमं जग्मतुः ।

मन्त्रियों को राज्य का भार सौंपकर, राजा दिलीप तथा सुदक्षिणा ने पवित्र होकर पुत्र की कामना से ब्रह्माजी की पूजा करके अपने कुलगुरु वसिष्ठजी के आश्रम की ओर प्रस्थान किया ॥ ३५ ॥

अथ धुरोऽवतारानन्तरं पुत्रकाम्ययात्मनःपुत्रेच्छया । 'काम्यच्च' इति पुत्रशब्दात्काम्यच्प्रत्ययः । 'अप्रत्ययात्' इति पुत्रकाम्यधातोरकारप्रत्ययः । ततष्टाप्, तया । तौ दंपती जायापती । राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः । प्रयतौ पूतौ विधातारं ब्रह्माणमभ्यर्च्य । 'स खलु पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः । गुरोः कुलगुरोर्वसिष्ठस्याश्रमं जग्मतुः । पुत्रप्राप्त्युपायापेक्षयेति शेषः ॥ ३५ ॥

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥३६॥

अन्वयः—स्निग्धगम्भीरनिर्घोषम्, एकं स्यन्दनं, प्रावृषेण्यं पयोवाहं विद्युदैरावतौ इव, आस्थितौ, ('तौ जग्मतुः' इति पूर्वेण संबन्धः) ।

मधुर एवं गम्भीर घरघराहट वाले एक रथ पर चढ़कर सुदक्षिणा और दिलीप इस प्रकार चले जा रहे थे, जैसे वर्षा के वादल पर बिजली और एरावत (इन्द्र का हाथी) चले जा रहे हों ॥ ३६ ॥

स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम्। प्रावृषि भवः प्रावृषेण्यः। 'प्रावृष एण्यः' इत्येण्यप्रत्ययः। तं प्रावृषेण्यं पयोमेघं विद्युदैरावताविव। आस्थितावारूढौ। जग्मतुरिति पूर्वेण संबन्धः। इर आपः। 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः। इरावान्समुद्रः तत्र भवः ऐरावतोऽभ्रमातङ्गः। 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः। अभ्रमातङ्गत्वाच्चाभ्रस्थरूपत्वात्' इति कीरस्वामी। अत एव मेघारोहणं विद्युत्साहचर्यं च घटते। किञ्च विद्युत ऐरावतसाहचर्यादैरावती संज्ञा। ऐरावतस्य स्त्र्यैरावतीति कीरस्वामी। तस्मात्सुष्ठूक्तं विद्युदैरावताविवेतीति। एकरथारोहणोक्त्या कार्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं च सूचयति ॥ ३६ ॥

मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥३७॥

अन्वयः—आश्रमपीडा मा भूत्, इति, परिमेयपुरःसरौ, अनुभावविशेषात् तु सेनापरिवृतौ, इव, 'स्थितौ जग्मतुः'।

आश्रम के निवासी जनों के कार्य में वाधा न हो, इसलिये राजा दिलीप ने परिमित 'तीन-चार' सेवकों को ही साथ लिया, किन्तु अपने प्रताप व तेज से वे ऐसे जान पड़ते थे, मानों वड़ी भारी सेना से घिरे हों ॥ ३७ ॥

पुनः किंभूतौ दम्पती ? आश्रमपीडा मा भून्मास्त्वित हेतोः। 'माङि लुङ' इत्याशीरर्थे लङ। 'न माङयोगे' इत्यडागमनिषेधः। परिमेयपुरःसरौ परिमितपरिचरौ। अनुभावविशेषात्तु तेजोविशेषात्सेनापरिवृताविव स्थितौ ॥ ३७ ॥

सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥३८॥

अन्वयः—सुखस्पर्शैः, शालनिर्यासगन्धिभिः, पुष्परेणूत्किरैः, आधूतवनराजिभिः, वातैः सेव्यमानौ, 'तौ जग्मतुः' ।

प्रिय स्पर्श वाले, शाल के गोंद के सुगन्धयुक्त फूलों के पराग को उड़ाने वाले और वनवृक्षों की पंक्ति को धीरे-धीरे कँपाने वाले पवन से सेवा किए गये वे दोनों चले जा रहे थे ॥३८ ॥

पुनः कथंभूतौ ? सुखः शीतलत्वात्प्रियः स्पर्शो येषां तैः । शालनिर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः । 'शालः सर्जतरुः स्मृतः' इति शाश्वतः । उत्किरन्ति विक्षिपन्तीत्युत्किराः 'इगुपध०' इत्यादिना किरतेः कप्रत्ययः । पुष्परेणूनामुत्किरास्तैराधूता मान्द्यादीषत्कम्पिता वनराजयो यैस्तैर्वातैः सेव्यमानौ ॥ ३८ ॥

मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥३९॥

अन्वयः—रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा, भिन्नाः षड्जसंवादिनीः मनोभिरामाः, केकाः, शृण्वन्तौ, 'तौ जग्मतुः' ।

रथ के पहिये की घरघराहट सुनकर 'मेघों के गर्जन की भ्रांति से' ऊपर को मुख किए हुए मोरों की, शुद्ध और विकृत भेद से दो प्रकार की षड्ज स्वर जैसी, मधुर-मनोहर वाणी को सुनते हुए राजा दिलीप और सुदक्षिणा चले ॥ ३९ ॥

रथनेमिस्वनोन्मुखैः । मेघध्वनिशङ्कयोन्नमितमुखैरित्यर्थः । शिखण्डिभिर्मयूरैर्द्विधा भिन्ना । शुद्धविकृतभेदेनाविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविधः तत्सादृश्यात्केका अपि द्विधा भिन्ना इत्युच्यते । अत एवाह—षड्जसंवादिनीरिति । षड्भ्यः स्थानेभ्यो जातः षड्जः । तदुक्तम्—नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् । 'षड्भ्यः संजायते

यस्मात्तस्मात्षड्ज इति स्मृतः ॥' स च तन्त्रीकण्ठजन्मा स्वरविशे 'निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीक त्थिताः स्वराः' ॥ इत्यमरः। षड्जेन संवादिनीः सदृशीः। तदुक्तं ङ्गेन—'षड्जं मयूरो वदति' इति। मनोभिरामा मनसः प्रियाः। मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः। 'केका वाणी मयू इत्यमरः। ताः केकाः शृण्वन्तौ। इति श्लोकार्थः॥ ३९॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥४०॥

अन्वयः—अदूरोज्झितवर्त्मसु, स्यन्दनाबद्धदृष्टिषु, मृगद्वन्द्वेषु परस् क्षिसादृश्यं पश्यन्तौ, 'तौ जग्मतुः'।

रथ के मार्ग को छोड़कर पास से रथ को एकटक देखते मृगों के जोड़े में, सुदक्षिणा-दिलीप एक-दूसरे के नेत्रों की समानता देखते हुए, आश्रम को गये ॥४०॥

विश्रम्भाददूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु। स्यन् बद्धदृष्टिषु स्यन्दने रथ आबद्धा सञ्चिता दृष्टिर्नेत्रं यैस्तेषु। 'दृग्दृष्टि लोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः। कौतुकवशा सक्तदृष्टिष्वित्यर्थः। मृग्यश्च मृगाश्च मृगाः 'पुमान्स्त्रिया' इत्येक तेषां द्वन्द्वेषु मिथुनेषु। 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः। परस्परा सादृश्यं पश्यन्तौ। द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपा दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम्॥ ४०॥

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥४१॥

अन्वयः—श्रेणीबन्धात्, अस्तम्भां तोरणस्रजं वितन्वद्भिः, कलनि सारसैः क्वचिद्, उन्नमिताननौ, 'तौ जग्मतुः'।

  

किसी स्थान में आकाश में उड़ते हुए तथा प्रिय बोलने वाले हंसों को देखने के लिए ऊपर को मुख उठाये हुए वे चले जा रहे थे। एक पाँत में उड़ते हुए हंस ऐसे जान पड़ते थे मानो बिना खम्भे (चौखट) के ही बन्दनवार टँगी हो ॥ ४१ ॥

श्रेणीबन्धात्पङ्क्तिबन्धनाद्धेतोरस्तम्भामाधारस्तम्भरहितां तोरणं बहिर्द्वारम्। 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः। तत्र या स्रग्विरच्यते तां तोरणस्रजं वितन्वद्भिः। कुर्वद्भिरिवेत्यर्थः। उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम्। कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः करणैः। क्वचिदुन्नमिताननौ। 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः ॥ ४१ ॥

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥४२॥

अन्वयः—प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात्, तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ, 'तौ जग्मतुः'।

मनोरथ की सफलता को सूचित करने वाले वायु के अनुकूल होने से 'सामने दिशा में चलने से' घोड़ों के खुरों से उठी धूलि सुदक्षिणा के केशों और राजा दिलीप की पगड़ी को न छू सकी ॥ ४२ ॥

प्रार्थनासिद्धिशंसिनोऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वाद् गन्तव्यदिगभिमुखत्वात्। तुरगोत्कीर्णैः रजोभिरस्पृष्टा अलकादेव्या वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ। 'शिरसा वेष्टनशोभिना सुता' इति वक्ष्यति ॥ ४२ ॥

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥४३॥

अन्वयः—सरसीषु वीचिविक्षोभशीतलं, स्वनिःश्वासानुकारिणम्, अरविन्दानाम्, आमोदम् उपजिघ्रतौ 'तौ जग्मतुः'।

तालाबों की तरंगों में टकराने से शीतल अतएव अपने श्वास का अनुकरण करने वाली कमल की सुगन्ध को सूँघते हुए वे रा रानी जा रहे थे ॥४३॥

सरसीषु वीचिक्षोभशीतलमूर्मिसंघट्टनेन शीतलं स्वनिःश्वासमनु शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेन तयोरुत्कृष्टस्त्रीपुंसजातीय मुक्तम् । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३ ॥

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४॥

अन्वयः—आत्मविसृष्टेषु, यूपचिह्नेषु, ग्रामेषु यज्वनाम् अमो आशिषः, अर्घ्यानुपदं, प्रतिगृह्णन्तौ 'तौ जग्मतुः' ।

राजा दिलीप से ब्राह्मणों को दान में दिये गए और जिनमें यज्ञ स्तम्भ गड़े हुए थे, ऐसे गाँवों में अर्घ्य भेंट करने के पश्चात् याज्ञि ब्राह्मणों के सफल आशीर्वाद लेते हुए, सुदक्षिणा और दिलीप चले जा थे ॥ ४४ ॥

आत्मविसृष्टेषु स्वदत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वनां विधिनेष्टवताम् 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोङ्वनिप्' इति ङ्वनिप्प्रत्ययः आशिषः आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । पादार्घा च' इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः अर्घ्यस्यानुपदमन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकु र्वन्तौ । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनु क्लीबमव्ययम्' इत्यमरः ॥ ४४ ॥

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥४५॥

अन्वयः—हैयंगवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ, 'तौ जग्मतुः'।

भेंट देने को गौ का ताजा मक्खन लेकर आये हुए गाँव के बूढ़े अहीरों से जंगली वृक्षों के नाम पूछते हुए, राजा तथा सुदक्षिणा जा रहे थे।। ४५ ।।

ह्यस्तनगोदोहोद्भवं घृतं हैयंगवीनम्। ह्यः पूर्वेद्युर्भवम्। 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः। 'हैयंगवीनं संज्ञायाम्' इति निपातः। तत्सद्योघृतमादायोपस्थितान्घोषवृद्धान्। 'घोष आभीरपल्ली स्यात्' इत्यमरः। वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ। 'दुह्याच्—' इत्यादिना पृच्छतेर्द्विकर्मकत्वम्। कुलकम् ।। ४५ ।।

काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ।।४६।।

अन्वयः—व्रजतोः शुद्धवेषयोः तयोः हिमनिर्मुक्तयोः चित्राचन्द्रमसोः, योगे 'सति' काऽपि, अभिख्या, आसीत्।

मार्ग में जाते समय सुदक्षिणा के साथ उज्ज्वल वस्त्र पहने राजा दिलीप की वैसी ही अपूर्व शोभा हो रही थी जैसी शिशिर ऋतु के पश्चात् चैत्र की पूर्णिमा में चित्रा नक्षत्र के साथ निर्मल चन्द्र की होती है ।। ४६ ।।

व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणादिलीपयोः। हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव। योगे सति काप्यनिर्वाच्याभिख्या शोभाऽऽसीत्। 'अभिख्या नामशोभयोः' इत्यमरः। 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः। चित्रानक्षत्रविशेषः। शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ।। ४६ ।।

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ।।४७।।

अन्वयः—प्रियदर्शनः, बुधोपमः, भूमिपतिः तत्तत्, पत्न्यै दर्शयन् लङ्घितम् अपि अध्वानं न बुबुधे।

पण्डितों के समान बुद्धिमान्, तथा मनोहर शरीर वाले राजा दिलीप, अपनी स्त्री को मार्ग के सब दर्शनीय दृश्य दिखाते हुए, ऐसे गये कि पीछे छूटे मार्ग को भी न जान सके ॥ ४७॥

प्रियं दर्शनं स्वकर्मकं यस्यासौ प्रियदर्शनः। योग्यदर्शनीय इत्यर्थः। भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयंल्लङ्घितमतिवाहितमप्यध्वानं बुबुधे न ज्ञातवान्। बुधः सौम्य उपमोपमानं यस्येति विग्रहः। इदं विशे तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ॥ ४७ ॥

सदुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥४८॥

अन्वयः—दुष्प्रापयशाः, श्रान्तवाहनः, महिषीसखः, सः सायं, संयमिनः तस्य महर्षेः आश्रमम् प्रापत्।

अन्य मनुष्यों से, दुर्लभ यश वाले और थके हैं घोड़े जिनके ऐसे, राजा दिलीप अपनी पत्नी के साथ सायंकाल होते-होते संयमी महर्षि वसिष्ठ के आश्रम में पहुँच गए ॥ ४८ ॥

दुष्प्रापयशाः। दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः। श्रान्तवाहनो दूरोपगमनात्क्लान्तयुग्यः। महिष्याः सखा महिषीसखः। 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वसिष्ठस्याश्रमं प्रापत्। पुषादित्वादङ ॥ ४८ ॥

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥४९॥

अन्वयः—वनान्तरात्,उपावृत्तैः,समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्यमाणम्, 'आश्रमं प्रापत'।

दूसरे वन से समिधा, कुशा तथा फलों को लेकर लौटे हुए तपस्वियों से वसिष्ठाश्रम भरा हुआ था, और उन आनेवाले तपस्वियों की अदृश्य श्रौताग्नि अगवानी कर रहा था ॥ ४९ ॥

वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः। समिधश्च कुशांश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहरास्तैः। 'आङि ताच्छील्ये' इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैस्तपस्विभिः पूर्यमाणम्। 'प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति' इति श्रुतेः। यथाह—'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन्' इति ॥ ४९ ॥

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥५०॥

अन्वयः—नीवारभागधेयोचितैः उटजद्वाररोधिभिः, मृगैः, ऋषिपत्नीनाम् अपत्यैः इव, आकीर्णम् 'आश्रमं प्रापत्'।

ऋषिपत्नियों के बालकों के समान तिन्नी के चावल खाने के अभ्यासी, इसीलिए पर्णकुटियों के द्वारों को छेके खड़े हुए मृगों से वह आश्रम परिपूर्ण था ॥ ५० ॥

नीवाराणां भाग एव भागधेयोंऽशः। 'भागरूपनामभ्यो धेयः' इति वक्तव्यसूत्रात्स्वाभिधेये धेयप्रत्ययः। तस्योचितैः। अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैः ऋषिपत्नीनामपत्यैरिव आकीर्णं व्याप्तम् ॥ ५० ॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥५१॥

अन्वयः—सेकान्ते मुनिकन्याभिः आलवालाम्बुपायिनाम् विहङ्गानाम्, विश्वासाय, तत्क्षणोज्झितवृक्षकम्, 'आश्रमं प्रापत्'।

राजा दिलीप, पक्षिगण निर्भय होकर पानी पियें, इस दृष्टि से वृक्षों की जड़ों में पानी देकर मुनिबालिकाएँ जहाँ से तुरत हट जाती थीं उस आश्रम में पहुँचे ॥ ५१ ॥

सेकान्ते वृक्षमूलसेचनावसाने। मुनिकन्याभिः सेक्त्रीभिः। आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनाम्। 'स्यादालवालमावालमावापः' इत्यमरः। विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय 'समौ विश्रम्भविश्वासौ' इत्यमरः। तत्क्षणे सेकक्षणे उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम्। ह्रस्वार्थे कप्रत्ययः ॥ ५१ ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥५२॥

अन्वयः—आतपात्ययसंक्षिप्तनीवारासु, उटजाङ्गनभूमिषु, निषादिभिः मृगैः, वर्तितरोमन्थम्, 'आश्रमम् प्रापत्'।

राजा दिलीप सायंकाल के समय मुनि वशिष्ठ के आश्रम में पहुँचे जहाँ कि पर्णशालाओं के आँगनों में धूप के चले जाने से इकट्ठे किए नीवार नामक धान्य के ढेरों पर बैठे हुए हरिण रोमन्थ, अर्थात् जुगाली कर रहे थे ॥ ५२ ॥

आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु। 'नीवारास्तृणधान्यानि' इत्यमरः। उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु। 'पर्णशालोटजोऽस्त्रियाम्' इति। 'अङ्गनं चत्वराजिरे' इति चामरः। निषादिभिरुपविष्टैर्मृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् ॥ ५२ ॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥५३॥

अन्वयः—अभ्युत्थिताग्निपिशुनैः पवनोद्धूतैः आहुतिगन्धिभिः, धूमैः आश्रमोन्मुखान्, अतिथीन्, पुनानम्, 'आश्रमम् प्रापत्'।

राजा दिलीप मुनियों से किए गए हवन की गन्ध से मिश्रित धुएँ से, जो कि हवा से आश्रम के इधर-उधर फैला हुआ था, आने वाले अतिथियों को पवित्र करने वाले मुनि वसिष्ठजी के आश्रम में पहुँचे ॥५३॥

अभ्युत्थिताः प्रज्वलिताः। होमयोग्या इत्यर्थः। 'समिद्धेऽग्नावाहुतीर्जुहोति' इति वचनात्। तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः। आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम्। कुलकम् ॥ ५३ ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः।
तामवारोहयत्पत्नीं रथादवततार च ॥५४॥

अन्वयः—अथ, सः, यन्तारम् धुर्यान् विश्रामय, इति, आदिश्य, ताम् पत्नीम्, रथात्, अवारोहयत्, स्वयम् च अवततार।

आश्रम में पहुँच कर राजा सारथि को घोड़ों की थकान दूर करने का आदेश देते हुए सुदक्षिणा सहित रथ से उतरे ॥ ५४ ॥

अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिं धुरं वहन्तीति धुर्या युग्याः। 'धुरो यड्ढकौ' इति यत्प्रत्ययः। 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः। धुर्यान्रथाश्वान्विश्रामय विनीतश्रमान्कुर्वित्यादिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार। 'विश्रमय' इति ह्रस्वपाठे 'जनीजॄष०' इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः। दीर्घपाठे 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ह्रस्वाभाव इति वृत्तिकारः ॥ ४५ ॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥५५॥

अन्वयः—सभ्याः, गुप्ततमेन्द्रियाः, मुनयः, सभार्याय, गोप्त्रे, नयचक्षुषे, अर्हते, तस्मै, अर्हणाम् चक्रुः।

वसिष्ठजी की आज्ञा से आश्रम में स्थित जितेन्द्रिय मुनियों ने शास्त्रज्ञ, पूजा के योग्य एवं रक्षक और सुदक्षिणा-सहित राजा दिलीप की पूजा की ॥ ५५ ॥

सभायां साधवः सभ्याः । 'सभायां यः' इति यप्रत्ययः । मेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्याय गोप्त्रे रक्षकाय । शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे । अत एव प्रशस्ताय । पूज्यायेत्यर्थः । 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । राज्ञेऽर्हणां पूजां चक्रुः 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः ॥ ५५ ॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥५६॥

अन्वयः—सः सायन्तनस्य विधेः अन्ते अरुन्धत्या अन्वासितम् तपोनिधिम्, स्वाहया अन्वासितम् हविर्भुजम् इव ददर्श ।

राजा दिलीप ने, सायंकालिक संध्यावन्दनादि के अनन्तर अपनी पत्नी अरुन्धती से सेवित वसिष्ठजी को इस प्रकार बैठे देखा मानो अपनी पत्नी स्वाहादेवी से सेवित साक्षात् अग्निदेव हों ॥५६॥

स राजा सायंतनस्य सायंभवस्य । 'सायंचिरम्०' इत्यादिना ट्युलप्रत्ययः । विधेर्जपहोमानुष्ठानस्यान्तेऽवसानेऽरुन्धत्यान्वासितं पश्चादुपवेशनेनोपसेवितम् । कर्मणि क्तः । उपसर्गवशात्सकर्मकत्वम् । 'अन्वासनं ... इत्यादिवदुपपद्यते । तपोनिधिं वसिष्ठम् । स्वाहया स्वाहादेव्या । 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः । अन्वासितं हविर्भुजमिव । ददर्श । 'समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत् ॥' इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रतधर्मत्वेनोक्तं न कर्माङ्गत्वेन । विधेरन्त इति कर्मसमाप्त्यभिधानात् ॥ ५६ ॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥५७॥

अन्वयः—मागधी राज्ञी, राजा, च, तयोः, पादान्, जगृहतुः, गुरुपत्नी, गुरुः, च, तौ, प्रीत्या, प्रतिननन्दतुः ।

सुदक्षिणा और दिलीप ने गुरु वशिष्ठ और गुरु-पत्नी को नमस्कार किया । तब उन्होंने भी दोनों राजा-रानी को प्रेमपूर्वक आशीर्वाद दिया ॥ ५७ ॥

मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुन्धती-वसिष्ठयोः पादाञ्जगृहतुः । 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी गुरुश्च कर्तारौ । सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ । प्रीत्या हर्षेण प्रतिननन्दतुः । आशीर्वादादिभिः संभावयाञ्चक्रतुरित्यर्थः ॥ ५७ ॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमः ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥५८॥

अन्वयः—मुनिः, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् राज्याश्रममुनिम्, तम्, राज्ये, कुशलम्, प्रपच्छ ।

वशिष्ठजी ने दिलीप के रथ के हिलने-डुलने से उत्पन्न खेद को आतिथ्य सत्कार से दूर किया, और राज्य-संबन्धी कुशल पूछा ॥ ५८ ॥

मनिः । अतिथ्यर्थमातिथ्यम् । 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् । राज्यमेवाश्रमं तत्र मुनितुल्यमित्यर्थः । तं दिलीपं राज्ये कुशलं पप्रच्छ । पृच्छतेस्तु द्विकर्मत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः, सप्ताङ्गवचनः । 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' इत्युत्तरविरोधात्, तथाह मनुः—स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते ॥ इति । तत्र 'ब्राह्मणं

कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्य च ॥' इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद् ब्राह्म... चितः कुशलप्रश्नः एव कृत इत्यनुसंधेयम् । अत एवोक्तमरा... श्रममुनिमिति ॥ ५८ ॥

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥५९॥

अन्वयः—अथ, विजितारिपुरः वदताम् वरः, अर्थपतिः अथर्वनि... तस्य पुरः, अर्थ्याम्, वाचम्, आददे ।

वसिष्ठजी के कुशल पूछने पर वाक्पटु चक्रवर्ती राजा दिलीप ने... प्राय वचन बोले ॥ ५९ ॥

अथ प्रश्नान्तरं विजितारिपुरो विजिशत्रुनगरो वदतां वक्तॄणां श्रेष्ठः 'यतश्च निर्धारणम्' इति षष्ठी । अर्थपती राजाथर्ववेदस्य ... पुरोऽग्रेऽर्थ्यामर्थादनपेताम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्य... वाचमाददे । वक्तुमुपक्रान्तवानित्यर्थः । अथर्वनिधेरित्यनेन पुरोहितक... भिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथा कामन्दकः—'त्रय्यां दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्ति पौष्टिकम्' इति ॥ ५९ ॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥६०॥

अन्वयः—सप्तसु, अंगेषु, मे, शिवम्, उपपन्नम्, ननु, यस्य, मे, दैवी... मानुषीणाञ्च, आपदाम्, त्वम्, प्रतिहर्ता, असि ।

मेरे, स्वामी, अमात्य, सुहृत्, कोश, राष्ट्र, दुर्ग तथा बल-रूप राज्य के सातों अङ्गों में कुशल ही है, क्योंकि मेरी, दैवी तथा मानुषी, दोनों प्र... की विपत्तियों के दूर करने वाले आप स्वयं विद्यमान हैं ॥६०॥

हे गुरो ! सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गानि' इत्यमरः । शिवं कुशलमुपपन्नं ननु युक्तमेव । नन्ववधारणे । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । कथमित्यत्राह-यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनाम् । मानुषीणां मनुष्येभ्यः आगतानां चौरभयादीनाम् । उभयत्रापि 'तत आगतः' इत्यण् । 'टिड्ढाणञ्०' इत्यादिना ङीप् । आपदां व्यसनानां त्वं प्रतिहर्ता वारयितासि । अत्राह कामन्दकः—'हुताशनो जलव्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः ॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्' ॥ इति ॥ ६० ॥

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥६१॥

अन्वयः—दूरात्, प्रशमितारिभिः मन्त्रकृतः तव, मन्त्रैः, दृष्टलक्ष्यभिदः, मे, शराः, प्रत्यादिश्यन्ते इव ।

मंत्रों की रचना अथवा प्रयोग करने वाले आप (वशिष्ठ) के उन मंत्रों के कारण जो परोक्ष में ही (मेरे) शत्रुओं का विनाश कर देते हैं, प्रत्यक्ष लक्ष्य को बींध देने वाले मेरे बाण मानों निरर्थक हो जाते हैं ॥ ६१ ॥

दूरात्परोक्ष एव प्रशमितारिभिः । मन्त्रान्कृतवान्मन्त्रकृत् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव । मन्त्रैः कर्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ।

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥६२॥

अन्वयः—हे होतः त्वया, विधिवत्, अग्निषु, आवर्जितम् हविः अवग्रहविशोषिणाम्, सस्यानाम्, वृष्टिः, भवति ।

हे हवन करने वाले, गुरो ! आप जो विधिपूर्वक अग्नि में आहुति डालते हैं वह अवग्रह (वर्षा का अभाव) के कारण सूख जाने वाले धान्यों के लिए वृष्टि-रूप हो जाती है ॥६२॥

हे होतः ! त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादि ... कर्तृ । अवग्रहो वर्षप्रतिबन्धः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यच्प्रत्ययः । 'वृष्टिर्वर्षं तद्विघातेऽवाग्राहावग्रहौ समौ' इत्यमरः । तेन विशोषिणां विशुष्यतां सस्यानां वृष्टिर्भवति । वृष्टिरूपेण सस्यान्युपजीवयतीति भावः । अत्र मनुः 'अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' ॥ ६२ ॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥६३॥

अन्वयः—मदीयाः, प्रजाः, पुरुषायुषजीविन्यः, निरातङ्काः, निरीतयः 'यत्' 'सन्ति' तस्य, त्वद्ब्रह्मवर्चसम्, 'एव', हेतुः ।

मेरा प्रजा-वर्ग, जो सौ बरस तक जीने वाला तथा निर्भय है, तथा अतिवृष्टि आदि उपद्रवों से रहित है, उसमें आपका व्रत, वेदपाठ आदि ही कारण है ॥ ६३ ॥

आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् वर्षशतमित्यर्थः । 'शतायुर्वै पुरुषः' इति श्रुतेः । 'अचतुरविचतुरसुचतुर०' इत्यादिसूत्रेणाच्प्रत्ययान्तो निपातः । मदीयाः प्रजाः पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः निरातङ्का निर्भयाः 'आतङ्को भयमाशङ्का' इति हलायुधः । निरीतयोऽति- वृष्ट्यादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसंपत्तिरेव हेतुः । 'व्रताध्ययनसंपत्तिरित्येतद्ब्रह्मवर्चसम्' इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्प्रत्ययः । 'अतिवृष्टिर...

मुष्टिमूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' इति कामन्दकः ॥ ६३ ॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥६४॥

अन्वयः—ब्रह्मयोनिना, गुरुणा, त्वया, एवम्, चिन्त्यमानस्य, 'अत एव'. निरापदः, मे, सम्पदः, सानुबन्धाः, कथं न स्युः ।

ब्रह्मा से जन्म लेने वाले आप जैसे गुरु द्वारा मेरी इस प्रकार देख-भाल करने के कारण, (अतएव) विपत्तियों से मुक्त हुए (मुझ दिलीप की) मेरी संपत्तियाँ (सदा) स्थिर क्यों न वनी रहेंगी ॥ ६४ ॥

ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वयैवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य । अत एव निरापदो व्यसनहीनस्य मे सम्पदः सानुबन्धाः सानुस्यूतयः । अविच्छिन्ना इति यावत् । कथं न स्युः । स्युरेवेत्यर्थः ॥ ६४ ॥

किंतु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥६५॥

अन्वयः—किंतु. तव, एतस्याम्, वध्वाम्, अदृष्टसदृशप्रजम्, माम्, सद्वीपा, रत्नसूः, अपि, मेदिनी, न, अवति ।

यद्यपि आपकी कृपा से मेरी समस्त सम्पत्तियाँ अविच्छिन्न हैं तथापि आपकी इस शिष्य-वधू सुदक्षिणा से स्वसदृश पुत्र न पाकर समस्त रत्नों को उत्पन्न करने वाली द्वीपों से युक्त यह पृथ्वी भी मुझे संतुष्ट नहीं करती है ॥ ६५ ॥

किंतु तवैतस्यां वध्वां स्नुषायां 'वधूर्जाया स्नुषा चैव' इत्यमरः । अदृष्टा सदृश्यनुरूपा प्रजा येन तं मां सद्वीपाऽपि । रत्नानि सूयत इति रत्नसूरपि । 'सत्सूद्विष०' इत्यादिना क्विप् । मेदिनी नावति न प्रीणाति । अवधातू रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५ ॥

तदेव प्रतिपादयति—

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥६६॥

अन्वयः—मत्तः, परम्, पिण्डविच्छेददर्शिनः, वंश्याः, स्वधासंग्रह 'सन्तः', श्राद्धे, प्रकामभुजः, नूनम्, न, 'भवन्ति' ।

मेरे अनन्तर पुत्र के अभाव में पिण्ड के लोप का विचार मेरे पूर्वज श्राद्ध के अवसर पर स्वधा (पितृभोज्य) के संग्रह करते हुए निश्चय ही तृप्त होकर भोजन नहीं करते होंगे ॥ ६६ ॥

मत्तः परं मदनन्तरम् 'पञ्चम्यास्तसिल्' । पिण्डविच्छेददर्शिनः दानविच्छेदमुत्प्रेक्षमाणाः । वंशोद्भवा वंश्याः पितरः । स्वधेत्यव्ययं भोज्ये वर्तते । तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्म 'पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः' इत्यमरः । प्रकाम पर्याप्तभोजिनो न भवन्ति नूनं सत्यम् । 'कामं प्रकामं पर्याप्तम्' इत्य निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः ॥ ६६ ॥

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥६७॥

अन्वयः—मत्परम्, दुर्लभम्, मत्वा, 'इदानीम्' मया, आवर्जितम् पयः, पूर्वैः, स्वःनिश्वासैः, कवोष्णम्, 'यथा', उपभुज्यते, नूनम् ।

मेरे पश्चात् पुत्र के न होने से दुर्लभ समझकर आजकल मेरे दिये को मेरे पूर्वज अपने दुःख भरे निश्वासों से कुछ गर्म करके पीते हैं। कोई सन्देह नहीं है) ॥ ६७ ॥

मत्परं मदनन्तरम् । 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहि' इत्यनेन पञ्चमी । दुर्लभं दुर्लभ्यं मत्वा मयाऽऽवर्जितं मद्दत्तं पयः पितृभिः स्वनिःश्वासैर्दुःखजैः कवोष्णमीषदुष्णं यथा तथोपभुज्यते।

मिति तर्के। कवोष्णमिति कुशब्दस्य कवादेशः। 'कोष्णं कवोष्णं मंदोष्णं कदुष्णं त्रिषु तद्वति' इत्यमरः॥ ६७॥

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः॥६८॥

अन्वयः—इज्याविशुद्धात्मा, प्रजालोपनिमीलितः, अहम्, लोकालोकः, अचलः, इव, प्रकाशः, अप्रकाशः, च, अस्मि।

यज्ञ आदि से मैं देवऋण से मुक्त होने के कारण प्रसन्नचित्त, तथा पुत्र के अभाव में पितृऋण से मुक्त न होने के कारण मलिनचित्त हूँ, अतः मेरी स्थिति लोकालोक पर्वत के समान है, जिसके एक ओर प्रकाश तथा दूसरी ओर अँधेरा रहता है॥ ६८॥

इज्या यागः। 'व्रजयजोर्भावे क्यप्' इति क्यप्प्रत्ययः। तया विशुद्धात्मा विशुद्धचेतनः। प्रजालोपेन संतत्यभावेन निमीलितः कृतनिमीलनः सोऽहम्। लोक्यत इति लोकः। न लोक्यत इत्यलोकः। लोकश्चालोकश्चात्र स्त इति लोकश्चासावलोकश्चेति वा। लोकालोकश्चक्रवालोऽचल इव। 'लोकालोकश्चक्रवालः' इत्यमरः। प्रकाशत इति प्रकाशश्च देवर्णविमोचनात्। न प्रकाशत इत्यप्रकाशश्च पितॄणामविमोचनात्। पचाद्यच्। अस्मीति शेषः। लोकालोकोऽप्यन्तः सूर्यसंपर्काद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम्॥ ६८॥

ननु तपोदानादिसंपन्नस्य किमपत्यैरित्याह—

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे॥६९॥

अन्वयः—तपोदानसमुद्भवम्, पुण्यम्, लोकान्तरसुखम्, 'भवति'। हि शुद्धवंश्या, सन्ततिः, इह, परत्र, च, शर्मणे, भवति।

जो पुण्य तप अथवा दान से उत्पन्न होता है वह केवल परलोक में

ही सुख देता है, किन्तु शुद्ध वंश में उत्पन्न पुत्र तो इस लोक में परलोक में भी सुख पहुँचाता है ॥ ६९ ॥

समुद्भवत्यस्मादिति समुद्भवः कारणम्। तपोदाने समुद्भवो यस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम्। शुद्धे वंशे भवा शुद्धवंश्या संततिर्हि परत्र परलोके, इह च लोके शर्मणे सुखाय। 'शर्मशातसुखानि च' इत्यमरः। भवतीति शेषः ॥ ६९ ॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥७०॥

अन्वयः—हे विधातः, तया, हीनम्, माम्, स्नेहात्, स्वयम्, सिक्तम्, वन्ध्यं, आश्रमवृक्षकम् इव पश्यन्, कथम्, न दूयसे।

हे सृष्टि बनाने वाले, जिस प्रकार स्वयं प्रेमपूर्वक जल से सींच कर बढ़ाये हुए वृक्ष को फलशून्य देखकर दुःखी होना उचित है, उसी प्रकार मुझको भी पुत्र रहित देखते हुए आप क्यों दुःखी नहीं होते ? ॥ ७० ॥

हे ! विधातः ! स्रष्टः ! तया संतत्या हीनमपत्यं माम्। स्नेहात् स्वयमेव सिक्तं जलसेकेन वर्धितं वन्ध्यमफलम्। 'वन्ध्योऽफलोऽवकेशी' इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतमिव पश्यन्कथं न दूयसे न परितप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥ ७० ॥

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥७१॥

अन्वयः—हे भगवन्, मे, अन्त्यम्, ऋणम्, अनिर्वाणस्य, दन्तिनः, अरुन्तुदम्, आलानम्, इव, असह्यपीडम्, अवेहि।

हे भगवन् ! इस समय मुझे पैतृक ऋण इस प्रकार कष्ट पहुँचाता है जिस प्रकार कि स्नान-क्रिया न होने से हाथी को उसके बन्धन के मर्म को बींधने वाला खूंटा ॥ ७१ ॥

हे भगवन् ! ममान्त्यमृणं पैतृकमृणम् । अनिर्वाणस्य मज्जनरहितस्य । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः । दन्तिनो गजस्य। अरुर्मर्म तुदतीत्यरुन्तुदं मर्मस्पृक् । 'व्रणोऽस्त्रियामीर्ममरुः' इति, 'अरुन्तुदस्तु मर्मस्पृक्' इति चामरः। 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः । 'अरुर्द्विषत्—' इत्यादिना मुमागमः । आलानं बन्धनस्तम्भमिव । 'आलानं बन्धनस्तम्भे' इत्यमरः । असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तदवेहि । दुःसहदुःखजनकं विद्धीत्यर्थः । 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि' इति पालकाप्ये । 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । संतत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ।। ७१ ।।

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ।।७२।।

अन्वयः—हे तात, तस्मात्, यथा, मुच्ये, तथा, संविधातुम्, 'त्वम्' अर्हसि, हि इक्ष्वाकूणाम्, दुरापे, अर्थे, सिद्धयः, त्वदधीनाः, 'सन्ति' ।

हे गुरो, इसलिए जिससे कि मैं पितृऋण से उन्मुक्त हो सकूँ ऐसा उपाय कीजिये, क्योंकि इक्ष्वाकुवंशी राजाओं के कठिन कार्यों की सिद्धियाँ आपके ही आधीन हैं ।। ७२ ।।

हे तात ! तस्मात्पैतृकादृणाद्यथा मुच्ये मुक्तो भवामि । कर्मणि लट् । तथा संविधातुं कर्तुमर्हसि । हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । दुरपे दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीनास्त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी । 'न लोक—' इत्यादिना कृद्योगे षष्ठीनिषेधात् ।। ७२ ।।

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ।।७३।।

अन्वयः—इति, राज्ञा, विज्ञापितः, ऋषिः, ध्यानस्तिमितलोचनः, 'सन्' क्षणमात्रम्, सुप्तमीनः, ह्रदः, इव, तस्थौ ।

दिलीप की प्रार्थना के अनन्तर पुत्राभाव का कारण जानने के लि महर्षि वसिष्ठ, मछलियों के सो जाने से तरङ्गरहित तालाब के सम निश्चल होकर क्षण-मात्र समाधिस्थ हो गए ॥ ७३ ॥

इति राज्ञा विज्ञापित ऋषिर्ध्यानेन स्तिमिते लोचने यस्य स्तिमितलोचनो निश्चलाक्षः सन्क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ ॥ ७३ ॥

सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥७४॥

अन्वयः—प्रणिधानेन, भावितात्मा, सः, भुवः भर्तुः सन्ततेः स्तम्भकारणम्, अपश्यत्, अथ, एनम्, प्रत्यबोधयत् ।

महर्षि वसिष्ठ समाधि द्वारा शुद्ध चित्त होकर पृथ्वी के स्वामी दिलीप की सन्तान न होने का कारण जान गये और दिलीप से कहने लगे ॥ ७४ ॥

स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य संततेः स्तम्भकारणं संतानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् । स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धि' इत्यादिनाणि कर्तुः कर्मत्वम् ॥ ७४ ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥७५॥

अन्वय—पुरा, शक्रम्, उपस्थाय, उर्वीम्, प्रति, यास्यतः, तव, पथि, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, आसीत् ।

हे राजन्, पहले कभी तुम्हारे इन्द्र-भवन से भूलोक आते समय मार्ग में कल्पवृक्ष की छाया में कामधेनु बैठी हुई थी ॥ ७५ ॥

पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्योर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत् । स्थितेत्यर्थः ॥ ७५ ॥

  

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥७६॥

अन्वयः—ऋतुस्नाताम् इमाम्, राज्ञीम् धर्मलोपभयात्, स्मरन्, प्रदक्षिणक्रियार्हायाम् तस्याम्, त्वम्, साधु, न आचरः ।

ऋतुकाल में अभिगमन न होने से कहीं धर्म लोप न हो जाय, इस भय से केवल रानी का ही चिन्तन करने के कारण तुमने मार्ग में बैठी हुई कामधेनु का प्रदक्षिणादि से सत्कार नहीं किया ॥ ७६ ॥

ऋतुः पुष्पम् । रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यर्त्वभिगमनलक्षणस्य लोपाद् भ्रंशाद्यत् भयं तस्मात्स्मरन्ध्यायन् । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ।' इतिशास्त्रात्प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं नाचरो नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः—'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः—'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपसर्पति । बालगोघ्नापराधेन विध्यते नात्र संशयः ॥' इति ॥ ७६ ॥

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥७७॥

अन्वयः—यस्मात्, 'त्वम्' माम् अवजानासि, अतः, मत्प्रसूतिम्, अनाराध्य, ते, प्रजा, न, भविष्यति, इति, सा, त्वाम्, शशाप ।

क्योंकि तुम परिक्रमा आदि न करने से मेरा तिरस्कार कर रहे हो अतः मेरी सन्तान की आराधना किये विना तुम्हें सन्तान न होगी, ऐसा उसने तुम्हें शाप दे दिया ॥ ७७ ॥

यस्मात्कारणान्मामवजानासि तिरस्करोषि अतः कारणान्मत्प्रसूतिं मम

सन्ततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप। 'शप आक्रोशे' ॥ ७७ ॥

कथं तदस्माभिर्न श्रुतमित्याह—

स शापो न त्वया राजन्न च सारथिना श्रुतः।
नदत्याकाशगङ्गाया स्रोतस्युद्दामदिग्गजे ॥७८॥

अन्वयः—हे राजन्, सः, शापः, त्वया, न, श्रुतः, सारथिना, च, न, 'श्रुतः', उद्दामदिग्गजे, आकाशगङ्गायाः, स्रोतसि, नदति, 'सति'।

हे राजन्, कामधेनु का दिया हुआ वह शाप न तो तुमने सुना न तुम्हारे सारथि ने ही सुना, क्योंकि बन्धन-मुक्त (होकर स्नान के लिए आए) दिग्गजों से युक्त आकाशगङ्गा का प्रवाह कोलाहल कर रहा था॥ ७८ ॥

हे राजन्! स शापस्त्वया न श्रुतः। सारथिना च न श्रुतः। अश्रवणे हेतुमाह—क्रीडार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तस्मिन् आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥ ७८ ॥

अस्तु, प्रस्तुते किमायातमित्यत्राह—

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९॥

अन्वयः—तदवज्ञानात्, आत्मनः, ईप्सितम्, सार्गलम्, विद्धि, हि, पूज्य-पूजाव्यतिक्रमः, श्रेयः, प्रतिबध्नाति।

इसलिए कामधेनु का अनादर करने से अपने मनोरथ को रुका हुआ समझो, क्योंकि पूज्यों की पूजा के उल्लंघन से कल्याण में बाधा हो जाती है॥ ७९ ॥

तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्याप्तुमिष्टमीप्सितं मनोरथम्। आप्नोतेः सन्नन्तात्क्तः ईकारश्च। सार्गलं सप्रतिबन्धं विद्धि

जानीहि। तथाहि पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९ ॥

तर्हि गत्वा तामाराधयामि। स्वयं वा कथंचिदागमिष्यतीत्याशा न कर्तव्येत्याह—

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥८०॥

अन्वयः—सा, च, इदानीम्, दीर्घसत्रस्य, प्रचेतसः, हविषे, भुजङ्गपिहितद्वारम्, पातालम् अधितिष्ठति।

और वह कामधेनु इस समय चिरकाल साध्य वरुण के यज्ञ में दही, आदि हविष्य के लिए, सर्पों से अवरुद्ध द्वार (दरवाजा) वाले पाताल में गई हुई है ॥ ८० ॥

सा च सुरभिरिदानीं दीर्घसत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति। पाताले तिष्ठतीत्यर्थः। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥ ८० ॥

तर्हि का गतिरित्यत आह—

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥८१॥

अन्वयः—तदीयाम्, सुताम्, सुरभेः प्रतिनिधिम्, कृत्वा, शुचिः सपत्नीकः, 'सन्' आराधय, हि, सा, प्रीता, 'सती' कामदुघा 'भवति'।

इस समय तुम कामधेनु की पुत्री नन्दिनी को ही उसकी प्रतिनिधि मानकर शुद्ध होकर भार्या-सहित पूजा करो, क्योंकि प्रसन्न होने पर वह मनोरथ पूर्ण कर देती है ॥ ८१ ॥

तस्याः सुरभेरियं तदीया, तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः। सह पत्न्या वर्तते इति सपत्नीकः सन्। 'नद्यृतश्च' इति कप्प्रत्ययः।

  

आराधय। हि यस्मात्कारणात्सा प्रीता तुष्टा सती। कामान्दोग्धीति कामदुघा भवति। 'दुहः कब्घश्च' इति कप्प्रत्ययः, घादेशश्च ॥ ८१ ॥

इति वादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥८२॥

अन्वयः—इति वादिन एव होतुः अस्य आहुतिसाधनम् अनिन्द्या नन्दिनी नाम धेनुः वनात् आववृते।

वसिष्ठजी के ऐसा कहते हुए ही हवन शील इस (वशिष्ठ) की यज्ञ की आहुति (दधि, घी आदि) का साधन, कामधेनु की पुत्री नन्दिनी नाम की प्रशंसनीय गाय वन से लौट आई ॥८२॥

इति वादिनो वदत एव होतुर्हवनशीलस्य। 'तृन्' इति तृन्प्रत्ययः। अस्य मुनेराहुतीनां साधनं कारणम्। नन्दयतीति व्युत्पत्त्या नन्दिनी नामानिन्द्यागर्ह्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता। अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्, इति भावः ॥ ८२ ॥

संप्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥८३॥

अन्वयः—पल्लवस्निग्धपाटला, ललाटोदयम्, आभुग्नम्, श्वेतरोमाङ्कम्, बिभ्रती, नवम् शशिनम् 'बिभ्रती' सन्ध्या, इव 'स्थिता' वनात् 'आववृते'।

कोमल किसलय के समान चिकनी तथा पाटल (लाल) रंगवाली सन्ध्या के समान वह नन्दिनी कुछ टेढ़े तथा पश्चिम दिशा में उदित होने वाले नवीन चन्द्रमा के समान श्वेत वर्ण के रोम-चिह्न को अपने मस्तक पर धारण करती हुई (वन से लौटी) ॥ ८३ ॥

पल्लववत्स्निग्धा चासौ पाटला च संध्यायामप्येतद्विशेषणं योज्यम्। ललाट उदयो यस्य स ललाटोदयः। तमाभुग्नमीषद्वक्रम्।

'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः। "ओदितश्च" इति निष्ठातस्य नत्वम्। श्वेतरोमाण्येवाङ्कस्तं बिभ्रती। नवं शशिनं बिभ्रती संध्येव स्थिता ॥ ८३ ॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेणाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥८४॥

अन्वयः—कोष्णेन, अवभृथात्, अपि, मेध्येन, वत्सालोकप्रवर्तिना, प्रस्नवेण, भुवम्, अभिवर्षन्ती, कुण्डोध्नी, 'वनात्, आववृते'।

कुछ गरम तथा यज्ञान्तस्नानजल से भी पवित्र एवं बछड़े को देखकर स्वयं टपकने वाले दूध से पृथ्वी को सींचती हुई स्थूल थन वाली नन्दिनी (वन से लौटी) ॥ ८४ ॥

कोष्णेन किंचिदुष्णेन। "कवं चोष्णे" इति चकारात्कादेशः। अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण, 'पूतं पवित्रं मेध्यं च' इत्यमरः। वत्सस्यालोकेन प्रदर्शनेन प्रवर्तिना प्रवहता प्रस्नवेन क्षीराभिस्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती। कुण्डमिवोध आपीनं यस्याः सा कुण्डोध्नी। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। "ऊधसोऽनङ्" इत्यनङादेशः। "बहुव्रीहेरूधसो ङीष्" इति ङीष् ॥८४॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥८५॥

अन्वयः—खुरोद्धूतैः, अन्तिकात्, गात्रम्, स्पृशद्भिः, रजःकणैः, महीक्षितः, तीर्थाभिषेकजाम्, शुद्धिम्, आदधाना, 'वनात् आववृते'।

पास से शरीर को स्पर्श करने वाली खुरों से उठाई धूलि से पृथ्वीपति दिलीप की तीर्थ-जल में स्नान करने से उत्पन्न शुद्धि को करती हुई नन्दिनी (वन से लौटी) ॥ ८५ ॥

खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः। "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी। रजसां कणैः। महीं क्षियत ईष्ट इति

महीक्षित्तस्य। तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम्। शुद्धिमादधाना कुर्वाणा। एतेन वायव्यं स्नानमुक्तम्। उक्तं च मनुना—'आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम्। आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्।' इति॥ ८५॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥८६॥

अन्वयः—निमित्तज्ञः, तपोनिधिः, पुण्यदर्शनाम्, ताम्, दृष्ट्वा, आशंसितावन्ध्यप्रार्थनम्, याज्यम्, पुनः, अब्रवीत्।

शकुनशास्त्र के विद्वान् वसिष्ठ मुनि आई हुई पवित्रदर्शना नन्दिनी को देखकर सफल मनोरथ होने वाले राजा दिलीप से पुनः बोले॥ ८६॥

निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वसिष्ठः पुण्यं दर्शनं यस्यास्तां धेनुं दृष्ट्वा आशंसितं मनोरथः। नपुंसके भावे क्तः। तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम्। अवन्ध्यमनोरथमित्यर्थः। याजयितुं योग्यं याज्यं पार्थिवं पुनरब्रवीत्॥ ८६॥

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥८७॥

अन्वयः—राजन्, आत्मनः, सिद्धिम्, अदूरवर्तिनीम् विगणय, यत्, इयं, कल्याणी, नाम्नि, कीर्तिते एव, उपस्थिता।

हे राजन्, अब आप अपनी मनोरथसिद्धि शीघ्र ही पूर्ण हुई समझें, क्योंकि यह मङ्गलमूर्ति नन्दिनी नाम लेते ही सामने आ गयी॥ ८७॥

हे राजन्! आत्मनः कार्यस्य सिद्धिमदूरवर्तिनीं शीघ्रभाविनीं विगणय विद्धि। यद्यस्मात्कारणात्कल्याणी मङ्गलमूर्तिः। "बह्वादिभ्यश्च" इति ङीष्। इयं धेनुर्नाम्नि कीर्तिते सत्येवोपस्थिता॥ ८७॥

  

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥८८॥

अन्वयः—वन्यवृत्तिः, 'सन्', इमाम् गाम्, शश्वत्, आत्मानुगमनेन, अभ्यसनेन विद्याम्, इव प्रसादयितुम्, अर्हसि ।

जैसे कि अभ्यास के द्वारा विद्या प्रसन्न हो जाती है उसी प्रकार हे राजन् ! तुम भी निरन्तर कन्द, मूल, फल खाकर मुनियों के समान वृत्ति अपना कर इस गाय का सदा अनुसरण करते हुए इसे प्रसन्न करो ॥८८॥

वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य यथाभूतः सन् । इमां गां शश्वत्सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः अनुगमनेनानुसरणेन । अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव । प्रसादयितुं प्रसन्नां कर्तु मर्हसि ॥ ८८ ॥

गवानुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९॥

अन्वयः—अस्याम्, प्रस्थितायाम्, प्रतिष्ठेथाः, स्थितायाम्, स्थितिम्, आचरेः, निषण्णायाम्, निषीद, पीताम्भसि, अपः, पिबेः ।

हे राजन्, जब यह चले तब चलना, जब खड़ी हो तो खड़े होना, और बैठे तो बैठना, जब जल पी चुके तब जल पीना, इस प्रकार छाया के समान इसका अनुसरण करना ॥ ८९ ॥

अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु । तिष्ठेत्यर्थः । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीताम्भसि सत्यामपः पिबेः पिब ॥ ८९ ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥९०॥

अन्वयः—वधूः, भक्तिमती, प्रयता, च 'सती' अर्चिताम्, एनाम् प्रा... आ तपोवनात्, अन्वेतु, सायम् अपि, प्रत्युद्व्रजेत् ।

वधू सुदक्षिणा भी पवित्र होकर भक्तिपूर्वक इसकी पूजा करके प्रतिदिन प्रातःकाल तपोवन की सीमा तक इसे पहुँचाने जाये ... सायंकाल के समय भी तपोवन की सीमा पर पहुँचकर इसे स्वागतपूर्वक आश्रम में लाये ॥ ९० ॥

वधूर्जाया च भक्तिमती प्रयता सती गन्धादिभिरर्चितामेनां गां प्रा... तपोवनात् । आङ् मर्यादायाम् । पदद्वयं चैतत् । अन्वेत्वनुगच्छतु । साय... प्रत्युद्व्रजेत् प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ॥ ९० ॥

इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥९१॥

अन्वयः—इति त्वम्, आ प्रसादात्, अस्याः परिचर्यापरः, भव, अविघ्नम् अस्तु, पिता, इव, पुत्रिणाम्, धुरि, स्थेयाः ।

मेरी बतलाई विधि के अनुसार प्रसन्न होने तक तुम इसकी ... करो । तुम्हारे विघ्न नष्ट हों । अपने पिता के समान तुम भी पुत्र वा... में श्रेष्ठ होओ ॥ ९१ ॥

इत्यनेन प्रकारेण त्वमा प्रसादात्प्रसादपर्यन्तम् । 'आङ्मर्यादाभिविध्यो' इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः परिचर्यापरः शुश्रूषापरो भ... ते तवाविघ्नं विघ्नस्याभावोऽस्तु । "अव्ययं विभक्ति"—इत्यादिना... भावेऽव्ययीभावः । पितेव पुत्रिणां सत्पुत्रवताम् । प्रशंसायामिनिप्रत्यय... धुर्यग्रे स्थेयास्तिष्ठेः । आशीरर्थे लिङ् । 'एर्लिङि' इत्याकारस्यैकारादे... त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः ॥ ९१ ॥

  

तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥९२॥

अन्वयः—देशकालज्ञः, प्रीतिमान्, शिष्यः, सपरिग्रहः, आनतः, 'सन्' शासितुः आदेशम्, तथा, इति, प्रतिजग्राह ।

देश तथा काल के ममंज्ञ राजा दिलीप ने प्रसन्न होकर सुदक्षिणा सहित बड़ी नम्रतापूर्वक गुरु वसिष्ठ के आदेश को स्वीकार किया ॥९२॥

देशकालज्ञः । देशोऽग्निसंनिधिः । कालोऽग्निहोत्रावसानसमयः । विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतमिति जानन् । अत एव प्रीतिमाञ्शिष्योऽन्तेवासी राजा सपरिग्रहः सपत्नीकः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । आनतो विनयनम्रः सन् । शासितुर्गुरोरादेशमाज्ञां तथेति प्रतिजग्राह स्वीचकार ॥ ९२ ॥

अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोदितश्रियम् ॥९३॥

अन्वयः—अथ, प्रदोषे, दोषज्ञः सूनृतवाक्, स्रष्टुः, सूनुः, ऊर्जितश्रियम्, विशाम्, पतिम्, संवेशाय, विससर्ज ।

तब रात्रि के समय सत्य-प्रियभाषी विद्वान् ब्रह्मा के पुत्र वसिष्ठ ने लक्ष्मीसंपन्न राजा दिलीप को सोने के लिए आज्ञा दी ॥ ९३ ॥

अथ प्रदोषे रात्रौ दोषज्ञो विद्वान् । 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः । सूनृतवाक्सत्यप्रियवाक् । 'प्रियं सत्यं च सूनृतम्' इति हलायुधः । स्रष्टुः सूनुर्ब्रह्मपुत्रो मुनिः । अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति । उदितश्रियं विशांपतिं मनुजेश्वरम् । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । संवेशाय निद्रायै । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । विससर्जाज्ञापयामास ॥ ९३ ॥

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥९४॥

अन्वयः—कल्पवित्, मुनिः, तपःसिद्धौ सत्याम् अपि, नियमापेक्षया अस्य, वन्याम्, एव, संविधाम्, कल्पयामास ।

व्रत-प्रयोग में कुशल मुनि वसिष्ठ ने तप की सिद्धि से राजाओं के योग्य शय्या तैयार कर देने की सामर्थ्य होने पर भी दिलीप के लिए नन्दिनी के सेवा-रूप व्रत का ध्यान रखते हुए कुशाओं के विछौने का ही प्रबन्ध किया ॥ ९४ ॥

कल्पविद्व्रतप्रयोगाभिज्ञो मुनिः तपःसिद्धौ सत्यामपि । तपसा राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः । नियमापेक्षया तदाप्रभृत्येव व्रतचर्यापेक्षया । अस्य राज्ञो वन्यामेव । संविधीयतेऽनयेति संविधाम् कुशादिशयनसामग्रीम् । "आतश्चोपसर्गे" इति कप्रत्ययः । "अकर्तरि च कारके संज्ञायाम्" इति कर्माद्यर्थत्वम् । कल्पयामास सम्पादयामास ॥९४॥

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥९५॥

अन्वयः—प्रयतपरिग्रहद्वितीयः, सः, कुलपतिना, निर्दिष्टाम्, पर्णशालाम्, अध्यास्य, कुशशयने, संविष्टः, 'सन्' तच्छिष्याध्ययननिवेदितावसानाम्, निशाम्, निनाय ।

राजा दिलीप नियमों का पालन करने वाला सुदक्षिणा के साथ कुलपति वसिष्ठजी द्वारा बताई हुई पर्णकुटी के कुशासन पर सोये तथा उनके शिष्यों द्वारा किये गए वेदघोष से यह जानकर कि रात बीत गई है, जाग गये ॥ ९५ ॥

स राजा कुलपतिना मुनिकुलेश्वरेण वसिष्ठेन निर्दिष्टां पर्णशालां

मध्यास्याधिष्ठाय तस्यामधिष्ठानं कृत्वेत्यर्थः। "अधिशीङ्" इत्यादिना-धारस्य कर्मत्वम्। कर्मणि द्वितीया। प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति स तथोक्तः। कुशानां शयने संविष्टः सुप्तः सन्। तस्य वसिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसानं यस्यास्तां निशां निनाय गमयामास। अपररात्रेऽध्ययने मनुः—'निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्'। 'न चापररात्रमधीत्य पुनः स्वपेत्' इति गौतमश्च। प्रहर्षिणीवृत्तमेतत् तदुक्तम्—म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्।

इति महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनी-समाख्यया व्याख्यया भाषानुवादेन च समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये वसिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः।

---

महाकवि-श्रीभारविप्रणीतम्

# [1]किरातार्जुनीयम्

## 'घण्टापथ'-भाषानुवाद-सहितम्

### प्रथमः सर्गः

(कोलाचल-श्रीमल्लिनाथ-सूरिकृतो घण्टापथः)

अर्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत् ।
पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥

आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे ।
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥

तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथकविः सोऽयं मन्दात्माऽनुजिघृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥

---

१—किरातः—वनेचरो म्लेच्छजातिविशेषः अत्र तु किरातवेषधा[री] शिवः, अर्जुनश्च तृतीयः पाण्डवः । किरातश्च अर्जुनश्च किरातार्जु[नौ] (द्वन्द्वःसमासः), किरातार्जुनौ अधिकृत्य कृतं काव्यं किरातार्जुनीयम्, "अधिकृत्य कृते ग्रन्थे" इत्यनुवर्तमाने "शिशुक्रन्दयमसभद्वन्द्वजननादिभ्यश्छ[ः]" इति छ प्रत्ययः, "आयनेयी. . . . ." इति छस्य ईय्, किरातार्जुनीयमित्यन्व[र्था] संज्ञा ।

नारिकेलफलसंमितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥

नानानिबन्धविषयैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान्भारविनामा कविः—

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥'

—इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापाँश्च वर्जयेत्' इति निषेधशास्त्रस्याऽसत्काव्यविषयतां च पश्यन्किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाऽविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात्, 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥१॥

अन्वयः—कुरूणाम्, अधिपस्य, श्रियः, पालनीं, प्रजासु, वृत्तिं, वेदितुं, यम्, अयुङ्क्त, वर्णिलिङ्गी, सः, वनेचरः, विदितः (सन्), द्वैतवने, युधिष्ठिरं समाययौ ।

भाषार्थ—प्रजा को प्रसन्न रखने से ही राजा की राज्यलक्ष्मी स्थिर रह सकती है । इसलिये कुरुवंशी राजा जहाँ राज्य करते हैं उन देशों के स्वामी दुर्योधन का प्रजा के प्रति कैसा व्यवहार है, यह जानने के लिये युधिष्ठिर ने जिस गुप्तचर को भेजा था, ब्रह्मचारीवेषधारी वह वनेचर सब जान कर द्वैतवन में युधिष्ठिर से आ मिला ॥१॥

घण्टापथः—श्रिय इति। आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नात्रातीवोपयुज्यते। तदुक्तम्—

'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा॥' इति॥

कुरूणां निवासः कुरवो जनपदाः। 'तस्य निवासः' इत्यण्प्रत्ययः। 'जनपदे लुप्'। तेषाम् [कुरूणां] अधिपस्य [—स्वामिनः] सम्बन्धिनीम्। शेषे षष्ठी। श्रियः—राजलक्ष्म्याः। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। पाल्यतेऽनयेति पालनी, ताम् (पालनीं)—प्रतिष्ठापिकामित्यर्थः। प्रजारागमूलत्वात्सम्पद इति भावः। 'करणाधिकरणयोश्च' इति करणे ल्युट्। 'टिड्ढाणञ्'—इत्यादिना ङीप्। प्रजासु—जनेषु विषये। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः। वृत्तिं—व्यवहारं। वेदितुं—ज्ञातुं। यं—वनेचरम्। अयुङ्क्त—नियुक्तवान्। वर्णः—प्रशस्तिरस्यास्तीति वर्णी—ब्रह्मचारी।

तदुक्तम्—'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्॥'

एतदष्टविधमैथुनाऽभावः प्रशस्तिः। 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः। तस्य लिङ्गं—चिह्नमस्यास्तीति—वर्णिलिङ्गी—ब्रह्मचारिवेषवानित्यर्थः। सः—नियुक्तः। वने चरतीति वनेचरः—किरातः। 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः। 'चरेष्टः' इति टप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। विदितं—वेदनम्—अस्यास्तीति विदितः—परवृत्तान्तज्ञानवानित्यर्थः। ('अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः। अथवा—विदितवृत्तान्तो विदितः) उभयत्रापि 'पीता गावः', 'भुक्ता ब्राह्मणाः', 'विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम्। न तु कर्तरि क्तः। सकर्मकेभ्यस्तस्य विधानाऽभावात्। अत एव भाष्यकारः—'अकारो मत्वर्थीयः। विभक्तमेषामस्तीति विभक्ताः'

पीतमेषामस्तीति 'पीताः' इति सर्वत्र। अथवोत्तरपदलोपोऽत्र द्रष्टव्यः—विभक्ताः, पीता इति'। अत्र लोपशब्दार्थमाह कैयटः—'गम्यार्थस्याप्रयोग एव लोपोऽभिमतः। 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद्-भ्रातृषूपचरितम्। 'पीतोदका गावः' इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते' इति। तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचरे उपचर्यते। एतेन 'वनाय पीतप्रतिबद्धवत्साम्' 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' एवमादयो व्याख्याताः। अथवा विदितः—विदितवान्। सकर्मका-दप्यविवक्षिते कर्मणि कर्तरि क्तः। यथा 'आशितः कर्ता' इत्यादौ। यथाऽऽहुः—

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'॥इति॥

द्वैतवने—द्वैताख्ये तपोवने। यद्वा—द्वे इते गते यस्मात्तद्द्वीतम् द्वीतमेव द्वैतम्। तच्च तद्वनञ्च तस्मिन्। शोकमोहादिवर्जिते इत्यर्थः। युधि—रणे। स्थिरं युधिष्ठिरं—धर्मराजम्। 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक्। 'गवियुधिभ्यां स्थिरः' इति षत्वम्। समाययौ—सम्प्राप्तवान्। अत्र 'वने वनेचरः' इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्त्या वृत्त्यनुप्रासो नामालङ्कारः। अस्मिन्सर्गे वंशस्थवृत्तम्। तल्लक्षणम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति॥ १॥

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तत्गुणसम्पन्नत्वमादर्शयन्नाह—

कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।
न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः॥२॥

अन्वयः—कृतप्रणामस्य, सपत्नेन, जितां, महीं, महीभुजे, निवेदयिष्यतः, तस्य, मनः, न विव्यथे, हि, हितैषिणः मृषा, प्रियं, प्रवक्तुं, न इच्छन्ति।

भाषार्थः—युधिष्ठिर को प्रणाम करने के बाद, शत्रु द्वारा जीती हुई पृथिवी का (अर्थात् दुर्योधन के उत्कर्ष का) वर्णन उनके सामने करते हुए

उस वनेचर के मन में किसी प्रकार का भय या चंचलता नहीं हुई। क्योंकि वास्तव में हित चाहने वाले व्यक्ति मीठी-मीठी झूठी बातें कहकर किसी को धोखे में रखना नहीं चाहते ॥ २ ॥

कृतप्रणामस्येति। (कृतः प्रणामो येन स कृतप्रणामः, तस्य) कृतप्रणामस्य—तत्कालोचितत्वात्कृतनमस्कारस्य। सपत्नेन—रिपुणा दुर्योधनेन। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। जितां—स्वायत्तीकृतां। महीं—(पृथ्वीं, महीं भुनक्तीति महीभुक्, तस्मै) महीभुजे—युधिष्ठिराय। क्रियाग्रहणात्सम्प्रदानत्वम्। निवेदयिष्यतः—ज्ञापयिष्यतः। 'लृटः सद्वा' इति शतृप्रत्ययः। तस्य—वनेचरस्य। मनो न विव्यथे—'कथमीदृगप्रियं राज्ञे विज्ञापयामी' ति मनसि न चचालेत्यर्थः। 'व्यथ् भयचलनयोः' इति धातोर्लिट्। उक्तमर्थमर्थान्तरन्यासेन समर्थयते—न हीति। हि—यस्मात्। हितमिच्छन्तीति हितैषिणः—स्वामिहितार्थिनः पुरुषाः। मृषा—मिथ्याभूतं। प्रियं—(मधुरं वचः) प्रवक्तुं (—जल्पितुं) नेच्छन्ति। अन्यथा कार्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः। 'अमौढ्यममान्द्यमृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः' इति नीतिवाक्यामृते[1] ॥ २ ॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

**द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ॥३॥**

---

१. 'नीतिवाक्यामृत' श्रीसोमदेव सूरि प्रणीत उच्चकोटि का ग्रन्थ है। इससे केवल राजनीति का ही नहीं अपितु भारतीय संस्कृति का पूर्ण ज्ञान हो जाता है। श्रीमल्लिनाथ ने इस टीका में स्थान-स्थान पर इसके उद्धरण दिये हैं।

अन्वयः—रहसि, स, द्विषां, विघाताय, विधातुम्, इच्छतः, भूभृतः, अनुज्ञाम्, अधिगम्य, सौष्ठवौदार्यविशेषशालिनीं, विनिश्चितार्थाम्, इति वाचम्, आददे ॥

भाषार्थः—एकान्त में वह वनेचर, शत्रुविनाश के उद्योग की इच्छा करते हुए राजा युधिष्ठिर की आज्ञा पाकर ललित, युक्तिपूर्ण तथा निश्चित अर्थ वाली वाणी इस प्रकार कहने लगा ॥ ३ ॥

द्विषामिति । रहसि—एकान्ते । सः—वनेचरः । द्विषां—शत्रूणाम् । कर्मणि षष्ठी । विघाताय—विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । 'भाववचनाश्च' इति तुमर्थे घञ्प्रत्ययः । अत्र यद्यपि तादर्थ्यमपि न दोषः, तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते । विधातुं—व्यापारं कर्तुमिच्छतः। 'समानकर्तृकेषु तुमुन्' । द्विषो विहन्तुमुद्युञ्जानस्येत्यर्थः । अत एव (भुवं बिभर्तीति भूभृत् तस्य) भूभृतः—युधिष्ठिरस्य । अनुज्ञाम् (—आज्ञाम्) अधिगम्य (—प्राप्य) सुष्ठु भावः सौष्ठवं—शब्दसामर्थ्यम् । सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः । उदारस्य भाव औदार्यम्—अर्थसम्पत्तिः, तयोर्द्वन्द्वः सौष्ठवौदार्ये । अत्रौदार्यशब्दस्याजाद्यदन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राऽल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातं कुर्वता सूत्रकृतैव पूर्वनिपातस्याऽनित्यत्वज्ञापनान्न पूर्वनिपातः । उक्तं च काशिकायाम्—'अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्' इति ।) ते एव विशेषः, तयोर्वा विशेषः, तेन शालते (—शोभते) इति सौष्ठवौदार्यविशेषशालिनी, ताम् । ताच्छील्ये णिनिः । विनिश्चितार्थां—विशेषतः प्रमाणतो निर्णीतार्थाम् । इति—वक्ष्यमाणरूपां वाचम् । आददे—स्वीकृतवान् । उवाचेत्यर्थः ॥ ३ ॥

प्रथमं तावदप्रियनिवेदकमात्मानं प्रत्यक्षोभं याचते—

क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥४॥

  

अन्वयः—नृप ! क्रियासु, युक्तैः, अनुजीविभिः, चारचक्षुषः, प्रभवः, न, वञ्चनीयाः, अतः, असाधु, साधु, वा, क्षन्तुम्, अर्हसि, हितं, मनोहारि, च, वचः, दुर्लभम् (भवति)।

भाषार्थः—हे राजन्, किसी भी कार्य में नियुक्त सेवकों द्वारा स्वामी ठगे नहीं जाने चाहियें, क्योंकि दूत ही राजा के नेत्र हैं (जैसे नेत्र से देखा हुआ प्रमाण होता है वैसे ही राजा के लिये दूत का कथन भी प्रमाण होता है) अतः अच्छा या बुरा जो कुछ भी मैं कहूँ उसे क्षमा करें। क्योंकि एक ही बात सुनने में अच्छी भी लगे और हित कर भी हो, ऐसा कठिनता से मिलता है॥ ४॥

क्रियास्विति। हे नृप ! क्रियासु—कृत्यवस्तुषु। युक्तैः—नियुक्तैः। (अनु जीवन्तीति अनुजीविनः तैः), अनुजीविभिः—भृत्यैः। चरादिभिरित्यर्थः। चरन्तीति चराः। पचाद्यच्। त एव चाराः। चरेः पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः। ते एव चक्षुर्येषां ते चारचक्षुषः। 'स्वपरमण्डले कार्याऽकार्यावलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते। प्रभवः—निग्रहानुग्रहसमर्थाः स्वामिनः। न वञ्चनीयाः—न प्रतारणीयाः। सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इति भावः। अतः—अप्रतार्यत्वाद्धेतोः। असाधु—अप्रियं, साधु—प्रियं वा। 'मदुक्त' मिति शेषः। क्षन्तुं—सोढुम् अर्हसि। कुतः ?। हितं—पथ्यं च, मनोहारि—प्रियं च, वचो दुर्लभम्। अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः॥ ४॥

तर्हि तूष्णींभाव एव वरमित्याशङ्क्याह—

स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः।
सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः॥५॥

अन्वयः—यः, अधिपं, साधु, न शास्ति, सः, किंसखा; यः, हितात् न

  

संश्रृणुते, स, किंप्रभुः; हि, नृपेषु, अमात्येषु, च, अनुकूलेषु, सर्वसम्पदः, रतिं, कुरुते ॥

भाषार्थः—जो अपने स्वामी को हित की राय नहीं देता वह मन्त्री, मित्र या सेवक दुष्ट है और जो अपने हितैषियों की उचित बात को न सुनकर मनमानी करता है वह राजा भी कुराजा ही है। जब राजा और अमात्य आदि परस्पर एक दूसरे के अनुकूल रहते हैं तभी सब प्रकार की सम्पदाओं का उपभोग करते हैं अर्थात् उन्हीं की राज्यलक्ष्मी सदा स्थिर रहती है॥ ५ ॥

इति । यः सखा—अमात्यादिः । (अधिपातीत्यधिपः तम्) अधिपं—स्वामिनं । साधु—हितं । न शास्ति—नोपदिशति । 'ब्रुविशासि' इत्यादिना शासेर्दुहादिपाठाद्द्विकर्मकत्वम् । सः—हितानुपदेष्टा । कुत्सितः सखा किंसखा—दुर्मन्त्रीत्यर्थः । 'किमः क्षेपे' इति समासान्तप्रतिषेधः । तथा यः —प्रभुः—निग्रहानुग्रहसमर्थः स्वामी, हितात्—आप्तजनाद्धितोपदेष्टुः सकाशात् । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी । न संश्रृणुते—न श्रृणोति । 'हित' मिति शेषः । 'समो गम्यृच्छि—'इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम् । अकर्मकत्वं वैवक्षिकम् । स—हितमश्रोता प्रभुः । किंप्रभुः—कुत्सितस्वामी । पूर्ववत्समासः । सर्वथा सचिवेन वक्तव्यं, श्रोतव्यं च स्वामिना । एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह—सदेति । हि—यस्मात् । नृपेषु—राजसु । अमा सह भवा अमात्यास्तेषु (अमात्येषु—मंत्रिषु) च 'अव्ययात्त्यप्' । अनुकूलेषु—परस्परानुरक्तेषु सत्सु । सर्वाश्च ताः सम्पदः सर्वसम्पदः—विविधैश्वर्याः । सदा रतिम्—अनुरागं । कुर्वते—कुर्वन्ति । न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्रैव राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धेरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसम्पत्तिसिद्धिरूपकार्येण समर्थनात् कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः तदुक्तम्—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः ॥ ५ ॥

  

सम्प्रति स्वाहङ्कारं परिहरति—

निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥६॥

अन्वयः—निसर्गदुर्बोधं, भूपतीनां, चरितं, क्व, अबोधविक्लवाः, जन्तवः, क्व, निगूढतत्त्वं, विद्विषां, नयवर्त्म, यत्, मया, अवेदि, अयं, तव, अनुभावः॥

भाषार्थः—कहाँ तो राजाओं का स्वभाव से ही दुर्ग्रह व्यवहार और कहाँ मेरे जैसे अज्ञानी पामर वनेचर प्राणी । अत्यन्त गुप्त रहस्यों वाले इस शत्रुओं के नीतिमार्ग को मैं जो कुछ जान पाया वह आपका ही प्रताप है ॥६॥

निसर्गेति । (निसर्गाद् दुर्बोधम्) निसर्गदुर्बोधं—स्वभावदुर्ग्रहम् । 'ईषद्दुःसुषु' इत्यादिना खल्प्रत्ययः । (भुवः पतयः भूपतयः) भूपतीनां चरितं (—व्यवहारः) क्व ? (अबोधेन विक्लवाः) अबोधविक्लवाः—अज्ञानोपहताः । जन्तवः—मादृशाः । पामरजना इत्यर्थः । क्व । नोभयं सङ्घटत इत्यर्थः । तथापि (निश्चयेन गूढं तत्त्वं यस्य तत्) निगूढतत्त्वं—संवृतयाथार्थ्यं । विद्विषां (—शत्रूणां, नयस्य वर्त्म) नयवर्त्म—षाड्गुण्ययोगः ।

'सन्धिविग्रहयानानि संस्थाप्यासनमेव च ।
द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम् ॥'

इत्यादिरूपः—यन्मयाऽवेदि । ज्ञातमिति यावत् । विदेः कर्मणि लुङ् । अयम् । इदं वेदनमित्यर्थः । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । तव अनुभावः—सामर्थ्यम् । अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टाद् घञ्प्रत्ययः । 'श्रिणीभुवोऽनुपसर्गे' इत्यनुपसर्गाद्भवतेर्धातोर्घञ्विधानात् । अत एव काशिकायाम्—'कथं प्रभावो राज्ञां ? । प्रकृष्टो भाव इति प्रादिसमासः' इति । दोषपरिहारौ सम्यग्ज्ञात्वैव विज्ञापयामि, न तु वृथा कर्णकठोरं प्रलपामीत्याशयः ॥ ६ ॥

सम्प्रति यद्वक्तव्यं तदाह—

विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥७॥

अन्वयः—सुयोधनः, नृपासनस्थः, अपि, वनाधिवासिनः, भवतः, पराभवं, विशङ्कमानः, दुरोदरच्छद्मजितां, जगतीं, नयेन, जेतुं, समीहते ॥

भाषार्थः—सुयोधन यद्यपि राजसिंहासनारूढ़ है फिर भी वन में रहने वाले आप से पराजित हो जाने की शंका करता हुआ द्यूतक्रीडा के बहाने जीती हुई पृथ्वी को नीति से वश में करने का प्रयत्न कर रहा है ॥७॥

विशङ्कमान इति । सुखेन युध्यते सुयोधनः । 'भाषायां शासियुधिदृशिमृषिभ्यो युज्वाच्यो' । (नृपस्य आसनं नृपासनं, तस्मिन् तिष्ठतीति) नृपासनस्थः—सिंहोसनस्थोऽपि । वनमधिवसतीति (तस्मात्) वनाधिवासिनः—वनस्थात् । राज्यभ्रष्टादपीत्यर्थः । भवतः—त्वत्तः । पराभवं—पराजयं । विशङ्कमानः—उत्प्रेक्षमाणः सन् । दुष्टमुदरमस्येति दुरोदरं—द्यूतम् । पृषोदरादित्वात्साधुः । 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । तस्य छद्मना—मिषेण । जितां—लब्धां, दुर्नयार्जिताम् । जगतीं—महीम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । नयेन—नीत्या । जेतुं—वशीकर्तुं । समीहते—व्याप्रियते । न तूदास्ते इत्यर्थः । बलवत्स्वामिकविशुद्धागमं च धनं भुञ्जानस्य कुतो मनसः समाधिरिति भावः । अत्र 'दुरोदरच्छद्मजिताम्' इति विशेषणपदार्थस्य चतुर्थपादार्थं प्रति हेतुत्वेनोपन्यासाद् द्वितीयं काव्यलिङ्गमलङ्कारः । तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥ ७ ॥

'नयेन जेतुं जगतीं समीहते' इत्युक्तम् । तत्प्रकारमाह—

तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः ॥८॥

अन्वयः—तथापि, जिह्मः, सः, भवज्जिगीषया, गुणसम्पदा, शुभ्रं, यशः,

  

तनोति, भूतिं, समुन्नयन्, महात्मभिः समं विरोधः, अपि, अनार्यसंगमाद्, वरम् ॥

भाषार्थः—यद्यपि वह दुर्योधन बड़ा क्रूर और कुटिल है फिर भी आपको जीतने की इच्छा के उद्देश्य से वह (अपने) (दान, दया आदि) गुणों की महिमा के द्वारा (अपना) धवल यश फैला रहा है। ऐश्वर्य को बढ़ाता हुआ महात्माओं के साथ विरोध भी नीचों की संगति से कहीं अच्छा है ॥ ८ ॥

तथापीति । तथापि—साशङ्कोऽपि । जिह्मः—वक्रः । वञ्चक इति यावत् । सः—दुर्योधनः—(भवन्तं जेतुमिच्छा भवज्जिगीषा, तया) भवज्जिगीषया—गुणैर्भवन्तमाक्रन्तुमिच्छयेत्यर्थः । 'हेतौ' इति तृतीया। (गुणानां सम्पत्, तया) गुणसम्पदा—दानदाक्षिण्यादिगुणगरिम्णा करणेन। शुभ्रं यशस्तनोति—स खलो गुणलोभनीयां त्वत्संपदमात्मसात्कर्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः। नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महानस्त्यस्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गाऽलाभे नीच-सङ्गमाद्वरम्, उत्कर्षावहत्त्वादित्याह—समुन्नयन्निति । तथा हि—भूतिं (—ऐश्वर्यं) समुन्नयन्—उत्कर्षमापादयन् । 'लटः शतृशानचौ'—इत्यादिना शतृप्रत्ययः । पुनर्लङ्ग्रहणसामर्थ्यात्प्रथमासामानाधिकरण्यम् । महात्मभिः (सज्जनैः) समम् सहेत्यर्थः । 'साकं सत्रा समं सह' इत्यमरः। (न आर्याः अनार्याः; अनार्याणां सङ्गमः, तस्माद्) अनार्यसङ्गमात्—दुर्जनसंसर्गात् । 'पञ्चमी विभक्ते' इति पञ्चमी । विरोधोऽपि वरं—मनाक्प्रियः । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः। अत्र मैत्र्युपेक्षया मनाक्प्रियत्वं विरोधस्य । 'भूतिं समुन्नयन्' इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्ताख्यानदोषापत्तिः। तदुक्तं काव्यप्रकाशे (?)—'समाप्तपुनरादानात्समाप्तपुनरात्तकम्' इति । न च वाक्यान्तरमेतद्येनोक्तदोषपरिहारः स्यात् । अर्थान्तरन्यासाऽलङ्कारः । स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवत्त्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥

ननु 'कातर्यं केवला नीतिः' इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह—

कृताऽरिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥९॥

अन्वयः—कृतारिषड्वर्गजयेन, अगम्यरूपां, मानवीं, पदवीं, प्रपित्सुना, अस्ततन्द्रिणा, तेन, पौरुषं, नक्तन्दिवं, विभज्य, नयेन, वितन्यते ॥

भावार्थः—काम-क्रोधादि को जीतकर वह अत्यन्त नम्र हो गया है। सामान्य जन जिसका अनुसरण नहीं कर सकते उस मनु के उपदिष्ट मार्ग का अनुसरण करना चाहता है। आलस्य-रहित होकर उसने कार्य का दिन और रात के लिये विभाग कर लिया है। इस प्रकार वह नीतिपूर्वक शासन को बढ़ा रहा है॥ ९॥

कृतेति। षण्णां वर्गः—समूहः 'षड्वर्गः'। अरीणाम्—अन्तःशत्रूणां कामक्रोधादीनां, षड्वर्गः—अरिषड्वर्गः। शिवभागवतवत्समासः। तस्य जयः कृतो येन, तेन तथोक्तेन। विनीतेनेत्यर्थः। विनीताधिकारं प्रजापालनमिति भावः। (अगम्यं रूपं यस्याः सा, तां) अगम्यरूपां—पुरुषमात्रदुष्प्रापाम्। मनोरिमां—मानवीम्—मनूपदिष्टसदाचारक्षुण्णामित्यर्थः। पदवीं—प्रजापालनपद्धतिं। प्रपित्सुना—प्रपत्तुमिच्छुना। प्रपद्यतेः सन्नन्तादुप्रत्ययः। 'सनि मीमा—' इत्यादिनेसादेशः। अत्र 'लोपोऽभ्यासस्य' इत्यभ्यासलोपः। अस्ता तन्द्रिः—आलस्यं यस्य तेन—अस्ततन्द्रिणा—अनलसेनेत्यर्थः। तदिः सौत्रो धातुः तस्मात् 'वङ्क्र्यादयश्च' इत्यौणादिकः क्रिन्प्रत्ययः। 'कृदिकारादक्तिनो वा ङीष् वक्तव्य' इति 'वन्दीघटीतरीतन्द्रीति ङीषन्तोऽपि' इति क्षीरस्वामी। तथा रामायणे प्रयोगः—'निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्' इति यावत्। तेन दुर्योधनेन। पुरुषस्य कर्म पौरुषं पुरुषकारः, उद्योग इति यावत्। युवादित्वादण्प्रत्ययः। 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि' इति विश्वः। नक्तं च दिवा च नक्तन्दिवम् अहोरात्रयोरित्यर्थः। 'अचतुर' इत्यादिना सप्तम्यर्थ-

वृत्त्योरव्यययोर्द्वन्द्वनिपातेऽच्समासान्तः । विभज्य—अस्यां वेलायामिदं कर्मेति विभागं कृत्वा । नयेन—नीत्या । वितन्यते—विस्तार्यते ॥ ९ ॥

सम्प्रति भृत्याद्यनुरागमाह—

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥१०॥

अन्वयः—गतस्मयः, सः, सन्ततं, अनुजीविनः, प्रीतियुजः, सखीन्, इव, सुहृदः, बन्धुभिः, समानमानान्, बन्धुतां, कृताधिपत्याम्, इव, साधु, दर्शयते ॥

भाषार्थः—अहङ्कार रहित होकर वह दुर्योधन सेवकों के साथ सदा प्रेमी मित्रों का-सा व्यवहार करता है और मित्रों को भाइयों की तरह मानता है, और वन्धुओं के साथ जैसे कि वे राज्याधिकारी हों व्यवहार दिखाता है। ऐसा वह लोक को दिखाता है (अर्थात् लोग ऐसा समझते हैं कि वह उत्तम प्रकार से वर्तता है) ॥ १० ॥

सखीनिति । (गतः स्मयो यस्य सः) गतस्मयः—निरहङ्कारः, अत एव सः—दुर्योधनः। सन्ततम्—अनारतं। साधु—सम्यक्। अकपटमित्यर्थः। अनुजीविनः—भृत्यान्। (प्रीतिं युञ्जन्ति, तान्) प्रीतियुजः—स्निग्धान्। सखीनिव—मित्राणीव। दर्शयते। लोकानिति शेषः। 'हेतुमति च' इति णिच्। 'णिचश्च' इत्यात्मनेपदम्। शोभनं हृदयं येषां तान्सुहृदः—मित्राणि च 'सुहृद्दुर्हृदौ मित्राऽमित्रयोः' इति निपातः। बन्धुभिः—(समानः मानः येषां ते, तान्) भ्रात्रादिभिः। समानमानान्—तुल्यसत्कारान्। दर्शयते। बन्धूनां समूहो बन्धुता, ताम्। 'ग्रामजनबन्धुसहायेभ्यस्तल्'। कृतमाधिपत्यं—स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते—बन्धूनधिपतीनिव दर्शयते इत्यर्थः। यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्सम्भावयतीत्यर्थः। अनुजीव्यादीनां 'कर्तुरीप्सिततमं कर्म' इति कर्मत्वम्।

पूर्वे त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—'स राजाऽनुजीव्यादीन् सख्यादीनिव दर्शयते। सख्यादय इव ते तु तं पश्यन्ति। सख्यादिभावेन पश्यतस्तांस्तथा दर्शयते। स्वयमेव छन्दानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः। अर्थात्तस्येप्सितकर्मत्वम्। अणि कर्त्तुरनुजीव्यादेः 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति पाक्षिकं कर्मत्वम्। एवं चात्राण्यन्तकर्मणो राज्ञो ण्यन्ते कर्तृत्वेऽपि 'आरोह्यते हस्ती स्वयमेव' इत्यादिवदश्रूयमाणकर्मान्तरत्वाभावान्नायं णेरणादिसूत्रस्य विषय इति मत्वा 'णिचश्च' इत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु णेरणादिसूत्रविषयत्वमप्यस्योक्तम्। यथाह—'पश्यन्ति भृत्या राजानम्'—'दर्शयते भृत्यान् राजा'—'दर्शयते भृत्यै राजा' अत्रात्मनेपदं सिद्धं भवति इति। अत्राह कैयटः—ननु कर्मान्तरसद्भावादत्रात्मनेपदेन न भाव्यम्। उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते—अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति। यथा—'स्थलमारोपयति मनुष्यान्' इति। इह त्वण्यन्तावस्थायां कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति ॥१०॥

न चायं त्रिवर्गात्प्रमाद्यतीत्याह—

**असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया।**
**गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगणः परस्परम् ॥११॥**

अन्वयः—यथायथं, विभज्य, समपक्षपातया, भक्त्या, असक्तम्, आराधयतः, अस्य, गुणानुरागात्, सख्यम्, ईयिवान्, इव, त्रिगणः, परस्परं न बाधते ॥

भाषार्थः—दुर्योधन ने धर्म-अर्थ-काम का यथोचित विभाग कर दिया है और वह तीनों की समान रूप से आसक्ति-रहित होकर आराधना करता है। इसलिये उसके गुणों के प्रति अनुराग के कारण मानो परस्पर मित्रता को प्राप्त हुए त्रिगण (धर्म, अर्थ और काम), परस्पर एक-दूसरे को बाधा नहीं पहुँचाते ॥११॥

असक्तमिति। यथायथं—यथास्वं, विभज्य—असङ्कीर्णरूपं

विविच्येत्यर्थः। 'यथास्वे यथायथम्' इति निपातनाद् द्विर्भावो नपुंसकत्वञ्च। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। पक्षे पातः—पक्षपातः—आसक्तिविशेषः समस्तुल्यो यस्यां तया समपक्षपातया। भक्त्या—अनुरागविशेषेण। पूज्येष्वनुरागो भक्तिरित्युपदेशः। पूज्यश्चायं त्रिवर्ग इति। असक्तम्—अनासक्तम्। अव्यसनितयेति यावत्। आराधयतः—सेवमानस्य। अस्य—दुर्योधनस्य। त्रयाणां—धर्मार्थकामानां, गणः—त्रिगणः—त्रिवर्गः। 'त्रिवर्गो धर्मकामाद्यैश्चतुर्वर्गः समीक्षकैः' इत्यमरः। गुणानुरागात्—तदीयगुणेष्वनुरागात्। गुणवदाश्रयलोभादित्यर्थः। सख्यं—मैत्रीम्। 'सख्युर्यः' इति यप्रत्ययः। ईयिवान्—उपगतवानिवेत्युत्प्रेक्षा। 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः। 'नात्रोपसर्गस्तन्त्रम्' इति काशिकाकार आह स्म। परस्परं न बाधते—समवर्तित्वादस्य धर्मार्थकामाः परस्परानुपमर्देन वर्द्धन्त इत्यर्थः। उक्तश्च—'धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः' इति॥ ११॥

अथ श्लोकत्रयेणोपायकौशलं दर्शयन्नादौ सामदाने दर्शयति—

**निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम्।**
**प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया॥१२॥**

अन्वयः—तस्य, निरत्ययं, साम, दानवर्जितं, न (प्रवर्तते), सत्क्रियां विरहय्य, भूरि दानं न (प्रवर्तते) गुणानुरोधेन विना विशेषशालिनी सत्क्रिया न प्रवर्तते॥

भाषार्थः—वह बिना कुछ दिये किसी पर निर्बाध रूप से प्रसन्नता प्रकट नहीं करता, (जिस किसी को संतुष्ट करना होता है अवश्य कुछ न कुछ देता है)। वह जिन्हें बहुत देता है उनका पूर्ण सत्कार भी करता है, गुणों की परीक्षा किये बिना किसी का विशेष रूप से सत्कार नहीं करता॥१२॥

निरत्ययमिति। तस्य—दुर्योधनस्य। निरत्ययं—निर्बाधम्। अमायिकमित्यर्थः। अन्यथा जनानां दुर्ग्रहत्वादिति भावः। साम—सान्त्वम्।

'सामसान्त्वमुभे समे' इत्यमरः। (दानेन वर्जितं) दानवर्जितं (—दानरहितं) न प्रवर्तते। अन्यथा लुब्धाद्यावर्जनस्य शुष्कप्रियैर्वाक्यदुष्करत्वादिति भावः। उक्तं च—

'लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्मणा।
मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम्॥' इति॥

तथा भूरि—प्रभूतम्, न तु कदाचित्स्वल्पमित्यर्थः। दानं—धनत्यागः। सदित्यादरार्थेऽव्ययम्। 'आदरानादरयोः सदसती' इति निपातसंज्ञास्मरणात्। तस्य क्रियां-सत्क्रियां। विरहय्य—विहाय। 'ल्यपि लघुपूर्वात्' इत्ययादेशः। न प्रवर्तते। अनादरे दानवैफल्यादिति भावः। चैवं सर्वत्र—येनाविवेकित्वं, कोशहानिश्च स्यादित्याह—प्रेति। (विशेषेण शालते इति) विशेषशालिनी—अतिशययोगिनी। सत्क्रिया। आदरक्रिया। (गुणेषु अनुरोधः गुणानुरोधः, तेन) गुणानुरोधेन—गुणानुरागेण विना न प्रवर्तते। 'पृथग्विना—' इत्यादिना तृतीया। गुणेष्वेवादरो भूरि दानं चेति नोक्तदोषावकाश इत्यर्थः। अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनादेकावल्यलङ्कारः।

तदुक्तं काव्यप्रकाशे—

'स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्।
विशेषणतया वस्तु यत्र सैकावली द्विधा'॥ इति॥ १२॥

अथ दण्डप्रकारमाह—

वसूनि वाञ्छन्न वशी न मन्युना 'स्वधर्म इत्येव' निवृत्तकारणः।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्॥१३॥

अन्वयः—वशी, सः, वसूनि, वाञ्छन्, न, मन्युना, न, निवृत्तकारणः (सन्), स्वधर्मः, इत्येव, गुरूपदिष्टेन, रिपौ, सुते, अपि, वा, धर्मविप्लवं, निहन्ति॥

भाषार्थः—मन और इन्द्रियों को वश में किए हुए वह (दुर्योधन) किसी प्रकार के धनादि लोभ से या किसी पर क्रुद्ध हो जाने से उसे दण्ड नहीं दे देता, बल्कि लोभादि कारणों से निवृत्त हुआ वह "राजा का यह धर्म है कि अपराधी को दण्ड दे और निरपराध को छोड़ दे" ऐसा समझकर कोई शत्रु हो अथवा अपना पुत्र ही क्यों न हो उसे भी शास्त्रोक्त दण्ड देकर अधर्म को रोकता है।। १३ ।।

वसूनीति । वशी—दुर्योधनः, वसूनि—धनानि, वाञ्छन्—लोभान्नेत्यर्थः। 'वसु तोये धने मणौ' इति वैजयन्ती । निहन्तीति शेषः। तथा मन्युना—कोपेन, न च । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति स्मरणादित्यर्थः । किन्तु (निवृत्तानि कारणानि यस्यासौ) निवृत्तकारणः—निवृत्तलोभादिनिमित्तः सन्। स्वधर्म इत्येव—स्वस्य राज्ञः सतो ममाऽयं धर्मो—ममेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः ।

'अदण्डयान्दण्डयन् राजा दण्डयांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥'

—इति स्मरणादिति भावः । (गुरुभिः उपदिष्टः, तेन) गुरूपदिष्टेन—प्राड्विवाकोपदिष्टेन ।

'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
समाहितमतिः पश्येद्व्यवहाराननुक्रमात् ॥'

—इति नारदस्मरणात् । दण्डेन—दमेन । शिक्षयेत्यर्थः । रिपौ सुतेऽपि वा। स्थितमिति शेषः । एतेनास्य समदर्शित्वमुक्तम् । (धर्मस्य विप्लवः, तम्) धर्मविप्लवं—धर्मव्यतिक्रमम् । अधर्ममिति यावत् । निहन्ति—निवारयति। दुष्ट एवास्य शत्रुः, शिष्ट एव बन्धुर्न तु सम्बधनिबन्धनः पक्षपातोऽस्तीत्यर्थः ॥ १३ ॥

  

सम्प्रति भेदकौशलं दर्शयति—

विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः ॥१४॥

अन्वयः—सः, शङ्कितः (सन्) परितः, परेतरान्, रक्षान्, विधाय, अशङ्किताकारम्, उपैति, क्रियापवर्गेषु, अनुजीविसात्कृताः, सम्पदः, अस्य कृतज्ञतां, वदन्ति ॥

भाषार्थः—वह सदा आप से शङ्कित रहता हुआ भी चारों ओर से आत्मीय जनों को रक्षक नियुक्त करके निश्शंक जैसा बना रहता है। काम कराने के बाद कर्मचारियों को दी हुई प्रचुर सम्पत्ति से प्रतीत होता है कि वह कितना कृतज्ञ है ॥ १४ ॥

विधायेति । शङ्का सञ्जाताऽस्य शङ्कितः—अविश्वस्तः सन्, परितः—सर्वत्र स्वपरमण्डले, (परेभ्य इतरे तान्) परेतरान्—आत्मीयान् । अवञ्चकानिति यावत् । यद्वा—परानितरयन्ति—भेदेनात्मसात्कुर्वन्तीति (परेतराः तान्—) परेतरान् । तत्करोतीति ण्यन्तात्कर्मण्यण-प्रत्ययः । रक्षन्तीति (रक्षाः, तान्—) रक्षान्—रक्षकान् । मन्त्रगुप्ति-समर्थानित्यर्थः । 'नन्दिग्रहि—' इत्यादिना पचाद्यच् । विधाय—कृत्वा नियुज्येत्यर्थः । '(न शङ्कितः अशङ्कितः अशङ्कितश्चासौ आकारः, तं) अशङ्किताकारमुपैति (—निःशंकवद्व्यवहरति अथवा) स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन्परमुखेनैव परान् भिनत्तीत्यर्थः ।

न च तान्रक्षानुपेक्षते येन तेऽपि विकुर्वीरन्नित्याह—क्रियते । क्रियापवर्गेषु—(क्रियाणाम् अपवर्गाः क्रियापवर्गाः, तेषु) कर्मसमाप्तिषु, अनुजीविसात्कृताः—भृत्याधीनाः कृताः अपरावर्तिततया दत्ता इत्यर्थः । 'देये त्रा च' इति सातिप्रत्ययः । सम्पदः (—सम्पत्तयः ) अस्य—राज्ञः, कृतज्ञताम्—उपकारित्वं, वदन्ति । प्रीतिदानैरेवास्य कृतज्ञत्वं प्रकाश्यते न तु वाङ्मात्रेणेत्यर्थः । कृतज्ञे राजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च तं रक्षन्तीति भावः ॥ १४ ॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति—

अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसम्पदः ॥१५॥

अन्वयः—तेन, पदेषु, सम्यक् विभज्य, लम्भिताः, विनियोगसत्क्रियाः, उपायाः, संघर्षम्, उपेत्य, इव, परिबृंहितायतीः, अर्थसम्पदः, अनारतं, फलन्ति ॥

भावार्थः—दुर्योधन द्वारा योग्य अधिकारों वाले पदों या व्यक्तियों में अच्छी प्रकार विभाजित करके प्रयोग किये हुए और इसी समुचित प्रयोग से अनुगृहीत हुए सामादि उपाय मानो अपनी-अपनी ओर से एक-दूसरे की स्पर्द्धा करते हुए सुस्थिर धनधान्यादि सम्पत्ति को निरन्तर उसके लिये उत्पन्न कर रहे हैं ॥ १५ ॥

तेन—राज्ञा, पदेषु—उपादेयवस्तुषु । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । सम्यक्—असङ्कीर्णमव्यस्तं च, विभज्य—विविच्य । विनियोगः (—प्रयोग) एव सत्क्रिया—अनुग्रहः, सत्कार इति यावत्। येषां ते। लम्भिताः—स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः। उपायाः—सामादयः । संघर्षं—परस्परस्पर्धामुपेत्येवेत्युत्प्रेक्षा । (परिबृंहिता आयतिर्यासां ताः) परिबृंहितायतीः—प्रचितोत्तरकालाः । स्थिरा इत्यर्थः। (अर्थानां सम्पदः अर्थसम्पदः, ताः) अर्थ-सम्पदः (—धनधान्यादिसम्पत्तीः) अनारतम्—अजस्रं, फलन्ति—प्रसुवते इत्यर्थः ॥ १५ ॥

अर्थसम्पदमेवाह—

अनेकराजन्यरथाश्वसङ्कुलं तदीयमास्थाननिकेतनाजिरम्।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥१६॥

अन्वयः—नृपोपायनदन्तिनां, अयुग्मच्छदगन्धिः, मदः, अनेकराजन्यरथाश्वसङ्कुलम्, तदीयम्, आस्थाननिकेतनाजिरम्, भृशम्, आर्द्रतां, नयति॥

भाषार्थः—दुर्योधन द्वारा जीते हुए राजाओं ने उपहार में इतने हाथी दिये हैं कि उनके सप्तपर्ण पुष्प की गन्ध जैसे मद-जल से सभा-भवन के आँगन में, जो कि अनेकों राजाओं के रथों से और घोड़ों से भरा है, पिछलन हो गई है ॥१६॥

अनेकेति। (अयुग्मानि—विषमानि (सप्त) छदानि यस्य तस्य,) अयुग्मच्छदस्य—सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्यासौ—अयुग्मच्छदगन्धिः। 'सप्तम्युपमान' इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च। 'उपमानाच्च' इति समासान्त इकारः। नृपाणाम्—उपायनानि—उपहारभूता ये दन्तिनः (—गजाः) तेषां मदः। 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। राज्ञामपत्यानि पुमांसो राजन्याः—क्षत्रियाः। 'राजश्वशुराद्यत्' इति यत्प्रत्ययः। राज्ञोऽपत्ये जातिग्रहणादन्। रथाश्चाश्वाश्च रथाश्वम्। सेनाङ्गत्वादेकवद्भावः। अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं—व्याप्तं, तदीयम्—(आतिष्ठन्त्यस्मिन् इति आस्थानं—सदः, तस्य निकेतनं—भवनं मण्डपो वा, तस्य अजिरं—प्राङ्गणम्, तत्) आस्थाननिकेतनाजिरं—सभामण्डपप्राङ्गणं, भृशम्—अत्यर्थं, आर्द्रतां—पङ्किलत्वं नयति। एतेन महासमृद्धिरस्योक्ता अत एवोदात्तालङ्कारः। तथा चालङ्कारसूत्रम्—'समृद्धिमद्वस्तुवर्णनमुदात्तः' इति ॥ १६ ॥

सम्प्रति जनपदक्षेमकरत्वमाह—

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसंपदः।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति ॥१७॥

अन्वयः—चिराय, तस्मिन्, क्षेमं, वितन्वति, (सति) अदेवमातृकाः, कुरवः, अकृष्टपच्याः, इव, कृषीवलैः, सुखेन, लभ्याः, सस्यसम्पदः, दधतः, चकासति ॥

भाषार्थः—बहुत काल से दुर्योधन प्रजा के पालन में तत्पर है। जो कुरुदेश केवल वर्षा के जल के भरोसे रहते थे और जहाँ के किसानों को अत्यन्त श्रम करना पड़ता था, वहाँ नदी आदि से नहर निकाल कर उसने

  

भूमि ऐसी उपजाऊ बना दी है कि कृषकों के किसी श्रम के बिना जैसे अपने आप उगे अन्न से परिपूर्ण वे कुरुदेश शोभित हो रहे हैं ॥१७॥

सुखेनेति । चिराय तस्मिन्—दुर्योधने, क्षेमं (—कुशलं) वितन्वति—क्षेमङ्करे सति । देवः—पर्जन्य एव माता येषां ते देवमातृकाः—वृष्ट्यम्बुजीविनो देशाः । ते न भवन्तीति —अदेवमातृकाः । नदीमातृका इत्यर्थः । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्' ।' इत्यमरः । एतेनास्य कुल्यादिपूर्तप्रवर्त्तकत्वमुक्तम् । कुरूणां निवासाः कुरवो—जनपदविशेषाः । कृष्टे स्वयमेव पच्यन्ते इति कृष्टपच्याः । 'राजसूय'—इत्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः । तद्विपरीता अकृष्टपच्या इव । कृषिर्येषामस्तीति । (कृषीवलाः, तैः—) कृषीवलैः—कर्षकैरित्यर्थः । 'रजःकृषि—'इत्यादिना वलच्प्रत्ययः । 'वले' इति दीर्घः । सुखेन—अक्लेशेन, लभ्याः—लब्धुं शक्याः, (सस्यानां सम्पदः, ताः) सस्यसम्पदो दधतः—धारयन्तः । "नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । चकासति—सर्वोत्कर्षेण वर्तन्ते इत्यर्थः । 'अदभ्यस्तात्' इति झेरदादेशः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । संपन्नजनपदत्वादसन्तापकरत्वाच्च दुःसाध्योऽयमिति भावः ॥ १७ ॥

नन्वेवं जनपदानुवर्तिनः कथमर्थलाभ इत्यत आह—

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥१८॥

अन्वयः—उदारकीर्त्तेः, दयावतः, अभिरक्षया, प्रशान्तबाधम्, उदयं, दिशतः, वसूपमानस्य, अस्य, गुणैः, उपस्नुता, मेदिनी, स्वयं, वसूनि, प्रदुग्धे।

भावार्थः—प्रचुर यशशाली, दयालु, सब प्रकार के उपद्रवों को शान्त करके प्रजा की रक्षा द्वारा वृद्धि करते हुए, कुबेरतुल्य संपत्तिशाली इस दुर्योधन के गुणों से द्रवित हुई-सी पृथ्वी उसके लिये स्वयं ही धन दुह रही है ॥१८॥

उदारेति । (उदारा कीर्तिः यस्य स उदारकीर्तिः, तस्य) उदारकीर्तेः—महायशसः । 'उदारो दातृमहतोः, इत्यमरः । दयावतः—परदुःखप्रहाणेच्छोः । अत एव प्रशान्तबाधं—(प्रशान्ताः बाधाः यस्मिन् स, तं) प्रशमितोपद्रवं यथा स्यात्तथेति क्रियाविशेषणम् । उदयविशेषणं वा । 'वा दान्तशान्त—' इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । (अभितः रक्षा अभिरक्षा, तया) अभिरक्षया—सर्वतस्त्राणेन । उदयं—वृद्धि । दिशतः—संपादयतः । (वसुः उपमानं यस्यासौ, तस्य) वसूपमानस्य—कुवेरोपमस्य । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अस्य—दुर्योधनस्य । गुणैः—दयादाक्षिण्यादिभिः । उपस्नुता—द्राविता । मेदिनी—पृथ्वी । वसूनि—धनानि । 'वसु तोये धने मणौ' इति वैजयन्ती । स्वयंप्रदुग्धे—अक्लेशेन दुह्यते इत्यर्थः । दुहे कर्मकर्तरि लट् । 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधः । यथा केनचिद्विदग्धेन नवप्रसूता रक्षिता च गौः स्वयं प्रदुग्धे तद्वदिति भावः । अलङ्कारस्तु—"विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति सर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृताङ्ग्या मेदिन्या भेदेऽभेदलक्षणातिशयोक्तिवशाद्दोह्यत्वेनोक्तिरिति संक्षेपः ॥ १८ ॥

वीरभटानुकूल्यमाह—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
नसंहतास्तस्य न भिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ।१९।

अन्वयः—महौजसः, मानधनाः धनार्चिताः, संयति, लब्धकीर्तयः, न संहताः, न भिन्नवृत्तयः, धनुर्भृतः, असुभिः, तस्य, समीहितुं, वाञ्छन्ति ॥

भाषार्थः—अत्यन्त वलशाली, जिनका मान ही धन है दुर्योधन द्वारा अनेक प्रकार से धन द्वारा पुरस्कृत, युद्धों में विजयी होने से लब्धकीर्ति, अपने स्वार्थ-साधन के लिये संघ न बनाने वाले और अपना भिन्न-भिन्न मत न रखने वाले योद्धा अपने प्राण देकर भी उस दुर्योधन का हित करने को तत्पर रहते हैं ॥१९॥

  

महौजस इति। (महत् ओजो येषां ते) [ महौजसः—महाबलाः। अन्यथा दुर्बलानामनुपकारित्वादिति भावः। मानः—कुलशीलाद्यभिमान एव—धनं येषां ते मानधनाः। अन्यथा कदाचिद् बलदर्पाद्विकुर्वीरन्निति भावः। धनार्चिताः—धनैरर्चिताः, सत्कृताः। अन्यथा दारिद्र्यादेनं जह्युरिति भावः। संयति—संग्रामे। (लब्धा कीर्तियैस्ते) लब्धकीर्तयः बहुयशस इत्यर्थः। अन्यथा कदचिन्मुह्येयुरिति भावः। संहताः—मिथःसङ्गताः। स्वार्थनिष्ठाः, न भवन्तीति—न संहताः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। (भिन्ना वृत्तिर्येषां ते) ) भिन्नवृत्तयो—मिथो विरोधात्स्वामिकार्यकरा—न भवन्तीति नभिन्नवृत्तयः। पूर्ववत्समासः। अन्यथा स्वामिकार्यविघातकतया स्वामिद्रोहिणः स्युरित्युभयत्रापि तात्पर्यार्थः। (धनूंषि बिभ्रति इति) धनुर्भृतः—धानुष्काः। आयुधीयमात्रोपलक्षणमेतत्। प्राधान्याद्धनुर्ग्रहणम्। तस्य—दुर्योधनस्य। असुभिः—प्राणैः। प्रियाणि—अभीष्टानि। समीहितुं—कर्तुं—वाञ्छन्ति। आनृण्यार्थं प्राणान्दातुमिच्छन्ति। अन्यथा दोषस्मरणादिति भावः। अत्र महौजसादिपदार्थानां प्राणदानकर्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात्काव्यलिङ्गमलङ्कारः। लक्षणस्तूक्तम्। तथा साभिप्रायविशेषणत्वात्परिकरालङ्कार इति द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः ॥ १९ ॥

सम्प्रति स्वराष्ट्रवत्परराष्ट्रवृत्तान्तमपि वेत्तीत्याह—

महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥२०॥

अन्वयः—अशेषितक्रियः, स, सच्चरितैः, चरैः, महीभृतां, क्रियाः, निःशेषं, वेद, धातुः, इव, तस्य, ईहितम्, हितानुबन्धिभिः, महोदयैः, फलैः, प्रतीयते ॥

भावार्थः—सम्पूर्ण राजकार्यों को समाप्त करके वह अपने सच्चरित्र

गुप्तचरों द्वारा दूसरे राजाओं के सारे क्रियाकलापों को पूर्ण रूप से जानता है। किन्तु जैसे विधाता की इच्छा को कोई नहीं जानता, काम हो जाने पर ही वह मालूम पड़ती है उसी प्रकार दुर्योधन की चेष्टाओं को भी प्रजा के हितकारक और महान् उदय करने वाले परिणामों से ही जाना जा सकता है। उससे पूर्व उसे कोई नहीं जान सकता ॥ २० ॥

महीभृतामिति। (न शेषिता क्रिया येन सः) अशेषितक्रियः—समापितकृत्यः, आफलोदयकर्मेत्यर्थः। (सत् चरितं येषां ते, तैः) सच्चरितैः—शुद्धचरितैः, अवञ्चकैरित्यर्थः। चरन्तीति चरास्तैश्चरैः—प्रणिधिभिः। पचाद्यच्। महीभृतां (—राज्ञां) क्रियाः—प्रारम्भान्, निःशेषं (—सम्पूर्णं यथा स्यात्तथा) वेद—वेत्ति, 'विदो लटो वा' इति णलादेशः, स्वरहस्यं तु न कश्चिद्वेदेत्याह—महोदयैरिति। धातुः (—ब्रह्मणः) इव, तस्य—दुर्योधनस्य, ईहितम्—उद्योगः, (महान् उदयो येषां ते महोदयाः, तैः) महोदयैः—महावृद्धिभिः, हितम्—अनुबध्नन्ति—अनुरुन्धन्तीति (हितानुबन्धिनः, तैः) हितानुबन्धिभिः—स्वन्तैरित्यर्थः। फलैः—कार्यसिद्धिभिः, प्रतीयते—ज्ञायते। फलानुमेयास्तस्य प्रारम्भा इत्यर्थः ॥ २० ॥

मित्रबलमाह—

**न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम्।**
**गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥२१॥**

अन्वयः—तेन, क्वचित्, सज्यं, धनुः, न, उद्यतं, आननं, वा, कोपविजिह्मं, न कृतम्, (तथापि) नराधिपैः, अस्य, शासनं, गुणानुरागेण, माल्यम्, इव, शिरोभिः, उह्यते ॥

भाषार्थः—दुर्योधन ने कभी भी किसी को दबाने के लिये न तो डोरी चढ़ा धनुष उठाया और न किसी के प्रति क्रुद्ध होने पर उसके मुख पर क्रोध का विकार आया। फिर भी केवल उसके गुणों पर मुग्ध हुए राजा लोग माला की तरह उसके शासन को शिरोधार्य करते हैं ॥ २१ ॥

  

नेति। तेन क्वचित्—कुत्रापि। सह ज्यया मौर्व्या सज्यम् (—आरोपितमौर्वीकं) 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। धनुः (—कार्मुकं) नोद्यतं—नोर्ध्वीकृतम्। आननं (—मुखं) च (विशेषेण जिह्मं—कुटिलं विजिह्मं, कोपेन विजिह्मं इति) कोपविजिह्मं—कोपकुटिलं न कृतम्। यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भावः। कथं तर्ह्याज्ञां कारयति राज्ञ इत्यत्राह—गुणेति। गुणेषु—दयादाक्षिण्यादिषु। अनुरागेण—प्रेम्णा। माल्यपक्षे—सूत्रानुषङ्गेषु। यद्वा—सौरभ्यगुणलोभेन। नराधिपैः (—राजभिः) अस्य शासनम्—आज्ञा। मालैव माल्यं, तदिव। 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्' इति क्षीरस्वामी। शिरोभिः—उह्यते—धार्यते। 'वचिस्वपियजादीनां किति' इति यकि सम्प्रसारणम्। अत्रोपमा स्फुटैव ॥ २१ ॥

सम्प्रत्यस्य धार्मिकत्वमाह—

**स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः।**
**मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ॥२२॥**

अन्वयः—इद्धशासनः, सः, नवयौवनोद्धतं, दुःशासनं, यौवराज्ये, निधाय, पुरोधसा, अनुमतः, (सन्) अखिन्नः, मखेषु, हव्येन, हिरण्यरेतसं, धिनोति ॥

भाषार्थः—इस समय अप्रतिहत आज्ञा वाला राजा दुर्योधन नई जवानी के मद से उन्मत्त अपने छोटे भाई दुःशासन को राज्य का भार सौंप कर स्वयं पुरोहित की आज्ञानुसार आलस्य को त्याग कर निरन्तर यज्ञों में आहुति देता हुआ अग्निदेव को प्रसन्न कर रहा है ॥ २२ ॥

स इति। (इद्धं—दीप्तं, शासनम्—आज्ञा यस्य सः) इद्धशासनः—अप्रतिहताज्ञः। स—दुर्योधनः। (नवं च तद्यौवनञ्च नवयौवनं, नवयौवनेन उद्धतः, तं) नवयौवनोद्धतं—प्रगल्भम्। धुरन्धरमित्यर्थः। दुःखेन शास्यते इति दुःशासनस्तम्। 'भाषायां शासियुधि'—इत्यादिना

बलर्थे युच्प्रत्ययः। (युवराजस्य भावः कर्म वा यौवराज्यं, तस्मिन्) यौवराज्ये—युवराजकर्मणि। ब्राह्मणादित्वात्ष्यञ्। निधाय—नियुज्येत्यर्थः। पुरोधसा—(पुरोहितेन) अनुमतः—अनुज्ञातः। तस्मिन्याजके सतीत्यर्थः। तदुल्लङ्घने दोषस्मरणादिति भावः। 'निष्ठा' इति भूतार्थे क्तः, न तु 'मतिबुद्धि—' इत्यादिना वर्तमानार्थे। अन्यथा 'पुरोधसा' इत्यत्र 'क्तस्य च वर्तमाने' इति षष्ठी स्यात्। (न खिन्नः) अखिन्नः—अनलसः। मखेषु—क्रतुषु। हव्येन—हविषा। हिरण्यं रेतो यस्य तं हिरण्यरेतसम्—अनलं। धिनोति—प्रीणयति। धिनोतेः प्रीणनार्थात् 'धिन्विकृण्व्योर च' इत्युप्रत्ययः। अकारश्चान्तादेशः।।।२२।।

प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुवः।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ।।२३।।

अन्वयः—सः, प्रलीनभूपालं, स्थिरायति, आवारिधि, भुवः मण्डलं, प्रशासद्, अपि, त्वद्, एष्यतीः, भियः, चिन्तयत्येव, अहो, बलवद्विरोधिता, दुरन्ता ।।

भाषार्थः—सम्पूर्ण राजाओं को वश में करके चिरस्थायी और समुद्रपर्यन्त पृथ्वी का शासन करने पर भी दुर्योधन, तुम से होने वाली विपत्तियों से घबराया-सा रहता है। ठीक ही है बलवानों के साथ विरोध करने का परिणाम दुःखकर ही होता है।। २३।।

प्रलीनेति। सः—दुर्योधनः। (प्रलीनाः भूपाला यस्मिस्तत्) प्रलीनभूपालम्—निःसपत्नमित्यर्थः। (स्थिरा आयतिर्यस्य तत्) स्थिरायति—चिरस्थायीत्यर्थः। भुवः (—पृथिव्याः) मण्डलम् (—वलयं), आ वारिधिभ्य आवारिधि, 'आङ्मर्यादाऽभिविध्योः' इत्यव्ययीभावः। प्रशासत्—आज्ञापयन्नपि। 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा। 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः। त्वत्—त्वत्तः। एष्यतीः—आगमिष्यतीः। 'एत्येधत्यूठ्सु' इति वृद्धिः। 'लृटः सद्वा' इति शतृप्रत्ययः।

'उगितश्च' इति ङीप्। 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः। भियः—भयहेतून्। विपद इत्यर्थः। चिन्तयति—आलोचयत्येव।

स एवाह—(बलवद्भिः—प्रबलैः, विरोधः—विग्रहः बलवद्विरोधः, सोऽस्यास्तीति बलवद्विरोधी, तस्य भावः)। बलवद्विरोधिता (दुष्टः अन्तो यस्याः सा) दुरन्ता—दुष्टावसाना। सार्वभौमस्यापि प्रबलैः सह वैरायमाणत्वमनर्थपर्यवसाय्येवेति तात्पर्यम्। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ २३॥

ननु गूढाकारेङ्गितस्य तस्य भयं त्वया कथं निरधारीत्यत्राह—

कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः।
तवाभिधानाद् व्यथते नताननः सुदुःसहान्मन्त्रपदादिवोरगः॥२४॥

अन्वयः—कथाप्रसङ्गेन जनैः, उदाहृतात्, तवाभिधानात्, सुदुःसहात्, मंत्रपदाद्, अनुस्मृताऽखण्डलसूनुविक्रमः, उरगः, इव (कथाप्रसङ्गेन, जनैः, उदाहृतात्, तवाभिधानात्, अनुस्मृताखण्डलसूनुविक्रमः) नताननः सन् व्यथते।

भाषार्थः—यदि कभी वार्ता-प्रसङ्ग में कोई आप का नाम ले लेता है तो दुर्योधन, अर्जुन के पराक्रम का स्मरण कर नीचे मुख करके इस प्रकार दुःखी होता है जैसे कि विषवैद्य (संपेरा) से उच्चारित गरुड और वासुकि के नामों से युक्त अत्यन्त असह्य मंत्रों के शब्दों से (सुनकर) इन्द्र के भाई विष्णु के वाहन गरुड़ की वेगवती गति का स्मरण करके सर्प नीचे मुख करके भीतर ही भीतर छटपटाया करता है॥ २४॥

घण्टापथः—कथेति। (कथायाः प्रसङ्गः, कथाप्रसङ्गः, तेन) कथाप्रसङ्गेन—गोष्ठीवचनेन। जनैः। (—लोकैः) अन्यत्र कथाप्रसङ्गेन—विषवैद्येन। 'कथाप्रसङ्गो वार्तायां विषवैद्येऽपि वाच्यवत्' इति विश्वः। एकवचनस्यातन्त्रत्वाज्जनविशेषणम् (—कथाप्रसङ्गेनेति)। उदाहृतात्—उच्चारितात्। तव अभिधानात्—नामधेयात्स्मारकाद्धेतोः। 'हेतौ' इति पञ्चमी। 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः।

अन्यत्र—तवाभिधानात्—'नामैकदेशग्रहणे नाम-मात्रग्रहणम्' इति न्यायात् —तश्च वश्च तवौ—ताक्ष्यंवासुकी, तयोरभिधानं यस्मिन्पदे तस्मात्। यद्वा कथाप्रसङ्ग इनाश्च ते जनाश्चेत्येकं पदम्। (आखण्डलस्य सूनुः आखण्डलसूनुः, अनुस्मृतः आखण्डलसूनोः विक्रमः येन स) अनुस्मृताखण्डलसूनुविक्रमः—स्मृतार्जुनपराक्रमः। सुदुःसहात्—अतिदुःसहात्। मन्त्रपदात्—मन्त्रशब्दात्स्मारकाद्धेतोः। (सर्पपक्षे) आखण्डलसूनुः—इन्द्रानुजः। उपेन्द्रो विष्णुरिति यावत्। 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः। तस्य विः—पक्षी। गरुड इत्यर्थः। तस्य क्रमः—पादविक्षेपः। सोऽनुस्मृतो येन स तथोक्तः—स्मृतगरुडमहिमा। उरग इव (नतम् आननं यस्य स) नताननः सन्। व्यथते—दुःखायते। 'पीडा बाधा व्यथा दुःखम्' इत्यमरः। अत्युत्कटभयकोपादिविकारा दुर्वारा इति भावः। 'सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्' इति न्यायादर्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम्॥ २४ ॥

निगमयति—

तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम्।
परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां गिरः।२५।

अन्वयः—तद्, त्वयि, जिह्मं, कर्तुम्, उद्यते, तत्र, विधेयम्, उत्तरम्, आशु, विधीयताम्, परप्रणीतानि, वचांसि, चिन्वतां, मादृशां, गिरः, प्रवृत्तिसाराः, खलु।

भाषार्थः—इसलिये तुम्हारे प्रति कपट का व्यवहार करने के लिए तय्यार दुर्योधन के विषय में तुम्हें जो कुछ करना है शीघ्र कर डालो। दूसरों की कही बातों को इकट्ठा करने वाले मेरे जैसे गुप्तचर की बातें तो केवल समाचारज्ञापन मात्र ही होती हैं ॥२५॥

तदिति। तत्—तस्मात्। त्वयि। जिह्मं—कपटं। कर्तुमुद्यते—त्वां जिघांसावित्यर्थः। तत्र—तस्मिन्दुर्योधने। विधेयं—कर्तव्यम्।

उत्तरं—प्रतिक्रिया । आशु विधीयतां—क्रियताम् । ननु कर्तव्यमपि त्वं वोच्यतामिति चेत्तत्राह—परेति । (परैः प्रणीतानि, तानि) परप्रणीतानि—परोक्तानि वचांसि । चिन्वतां—गवेषयतां । (अहमिव दृश्यमाना मादृशाः, तेषां) मादृशाम्—वार्ताहारिणामित्यर्थः । गिरः (—वाचः) (प्रवृत्तिः सारः यासां ताः) प्रवृत्तिसाराः—वार्तामात्रसाराः खलु । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । वार्तामात्रवादिनो वयम्, न तु कर्तव्यार्थोपदेशसमर्थाः अतस्त्वयैव निर्धार्य कार्यमिति भावः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः ॥ २५ ॥

**इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।**
**प्रविश्य कृष्णा-सदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥२६॥**

अन्वयः—वनसंनिवासिनां, पत्यौ, इति, गिरम्, ईरयित्वा, आत्तसत्क्रिये, गते (सति) अथ महीभुजा, कृष्णासदनं, प्रविश्य, अनुजसन्निधौ, तद्वचः, आचचक्षे ।

भाषार्थः—इस प्रकार एकान्त में दुर्योधन का वृत्तान्त सुना कर और प्रचुर पुरस्कार पाकर, वनेचरों के स्वामी के अपने स्थान को चले जाने पर, राजा युधिष्ठिर ने द्रौपदी के कमरे में जाकर भीमादि भाइयों के सामने ये सब बातें कहीं ॥२६॥

इतीति । (वने सन्निवसन्तीति वनसन्निवासिनः, तेषां) वनसंनिवासिनां पत्यौ—वनेचराधिपे । इति गिरम्—ईरयित्वा—उक्त्वा । (आत्ता सत्क्रिया येनासौ, तस्मिन्) आत्तसत्क्रिये—गृहीतपारितोषिके । गते सति । 'तुष्टिदानमेव चराणां हि वेतनम् । ते हि तल्लोभात्स्वामिकार्येष्वतीव त्वरयन्ते' इति नीतिवाक्यामृते । अथ (महीं भुनक्ति इति महीभुक्, तेन) महीभुजा—राज्ञा । (कृष्णायाः सदनं, तत्) कृष्णासदनं—द्रौपदीभवनं । प्रविश्य (अनुजानां—भ्रातॄणां, सन्निधिः —सामीप्यं, तस्मिन्) अनुजसंनिधौ—तत्—वनेचरोक्तं । वचः—वाक्यम् । आचचक्षे—आख्यातम् । अथवा—कृष्णेति पदच्छेदः । सदनं प्रविश्यानुज-

संनिधौ—तद्वचः कृष्णा (कर्मभूता) आचचक्षे—आख्याता। चक्षिङो दुहादेर्द्विकर्मकत्वादप्रधाने कर्मणि लिट्॥ २६॥

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः॥२७॥

अन्वयः—अथ, द्रुपदात्मजा, द्विषतां, सिद्धिं, ततः, निशम्य, ततस्त्याः, अपाकृतीः, विनियन्तुम्, अक्षमा, नृपस्य, मन्युव्यवसायदीपिनीः, गिरः, उदाजहार॥

भाषार्थः—इसके वाद शत्रुओं की सर्वतोमुखी सिद्धि को युधिष्ठिर के मुख से सुन कर और कौरवों के द्वारा अपने प्रति किये गये दुर्व्यवहारों को सोच कर उसका प्रतीकार न होने से क्षुव्ध हुई द्रौपदी युधिष्ठिर के क्रोध और उद्योग को उद्दीप्त करने वाली वाणी वोली॥२७॥

निःशम्येति। अथ द्रुपदात्मजा—द्रौपदी। द्विषतां सिद्धिं—वृद्धिरूपाम्। निशम्य। ततः—तदनन्तरम्। ततो—द्विषद्भ्य आगताः—ततस्त्याः। 'अव्ययात्त्यप्' इति त्यप्। अपाकृतीः—विकारान्। विनियन्तुं—निरोद्धुम्। (न क्षमा) अक्षमा (—असमर्था) सती, नृपस्य—युधिष्ठिरस्य। (मन्युश्च व्यवसायश्च मन्युव्यवसायौ, तयोः) मन्युव्यवसाययोः—क्रोधोद्योगयोः। दीपिनी—संवर्द्धिनीः। गिरः—वाक्यानि। उदाजहार—जगादेत्यर्थः॥ २७॥

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम्।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः॥२८॥

अन्वयः—भवादृशेषु, प्रमदाजनोदितम्, अनुशासनम्, अधिक्षेप, इव, भवति, तथापि, निरस्तनारीसमयाः, दुराधयः, मां, वक्तुं, व्यवसाययन्ति॥

भाषार्थः—आप जैसे वहुश्रुत व्यक्ति के लिये साधारण स्त्री द्वारा दिया गया कर्तव्योपदेश एक प्रकार का आप पर आक्षेप करना ही है, फिर भी

मनोव्यथाओं ने मुझे स्त्रीजनोचित मर्यादा छोड़ने को बाध्य किया है, और वे ही मुझे आपसे कुछ कहने को प्रेरित कर रही हैं ॥२८॥

भवादृशेष्विति। (भवन्त इव दृश्यन्ते इति) भवादृशाः—भवद्विधाः। पण्डिता इत्यर्थः। तेषु विषये। 'त्यदादिषु'—इत्यादिना कञ्। 'आ सर्वनाम्नः' इत्याकारादेशः। (प्रमदा एव जनः, तेन उदितम्) प्रमदाजनोदितं—स्त्रीजनोक्तम्। वदेः क्तः। 'वचिस्वपि'—इत्यादिना संप्रसारणम्। अनुशासनं—नियोगवचनं। अधिक्षेपः—तिरस्कार इव भवति। अतो न युक्तं वक्तुमित्यर्थः। तथापि—वक्तुमनुचितत्वेऽपि। (निरस्ताः नारीणां समयाः यैस्ते निरस्तनारीसमयाः—त्याजितशालीनतारूपस्त्रीसमाचाराः। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। (दुष्टाश्च ता आधयः) दुराधयः—समयोल्लङ्घनहेतुत्वाद् दुष्टा मनोव्यथाः। 'पुंस्याधिर्मानसी व्यथा' इत्यमरः। मां वक्तुं व्यवसाययन्ति—प्रेरयन्ति। न किंचिदयुक्तं दुःखिनामिति भावः॥ २८ ॥

अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः।
त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवाऽपवर्जिता ॥२९॥

अन्वयः—आखण्डलतुल्यधामभिः, स्ववंशजैः, भूपतिभिः, चिरं, अखण्डं, धृता, मही, मदच्युता, मतङ्गजेन, स्रग्, इव, त्वया, आत्महस्तेन, अपवर्जिता॥

भाषार्थः—इन्द्र जैसे तेजस्वी आपके वंशज राजाओं ने चिरकाल तक जिस सम्पूर्ण पृथ्वी पर अविच्छिन्न राज्य किया, उसे आपने इस प्रकार अपने हाथ से छोड़ दिया जैसे कोई मदोन्मत्त हाथी फूल की माला को दूर फेंक देता है ॥२९॥

अखण्डमिति। (आखण्डलेन तुल्यं धाम येषां ते आखण्डलतुल्यधामानः, तैः) आखण्डलतुल्यधामभिः—इन्द्रतुल्यप्रभावैः। (स्वस्य वंशः स्ववंशः, स्ववंशे जाताः स्ववंशजाः, तैः) स्ववंशजैः(—आत्मवंशोद्भवैः) भूपतिभिः—भरतादिभिः। चिरम् (—बहुकालं यावत्) अखण्डम्—अविच्छिन्नं धृता (—पालिता) मही—पृथ्वी। त्वया। म

श्च्योततीति मदच्युत् । क्विप् । तेन—मदस्राविणा । मतङ्गजेन (—करिणा) स्रगिव (—माल्यमिव) (आत्मनः हस्तः, तेन) आत्महस्तेन—स्वकरेण, स्वचापलेनेत्यर्थः । अपवर्जिता—परिहृता, त्यक्ता । स्वदोषादेवाऽयमनर्थागम इत्यर्थः ॥ २९ ॥

'स्वदोषादेवायमनर्थागमः' इत्युक्तम् । स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह—

**व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।**
**प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥३०॥**

अन्वयः—मूढधियः, ते, पराभवं, व्रजन्ति, ये, मायाविषु, मायिनः, न, भवन्ति । शठाः, तथाविधान्, असंवृताङ्गान्, निशिताः, इषवः, इव, प्रविश्य, घ्नन्ति ॥

भाषार्थः—वे मूर्ख सदा पराजित होते हैं जो कपटी धूर्तों के साथ छल कपट का व्यवहार नहीं करते । जैसे तीखे वाण विना ढके शरीर वाले योद्धाओं के शरीर के अन्दर घुस कर उन्हें मार डालते हैं वैसे ही कपटी धूर्त भी निश्छल व्यक्ति की भीतरी वातों को जानकर उसे नष्ट कर देते हैं ॥३०॥

व्रजन्तीति । (मूढा धीः येषां ते) मूढधियः—निर्विवेकबुद्धयः—ते (—जनाः) पराभवं व्रजन्ति (—पराजयं प्राप्नुवन्ति) ये (माया अस्ति येषां ते, तेषु) मायाविषु—मायावत्सु विषये 'अस्मायामेधा—' इत्यादिना विनिप्रत्ययः । मायिनः—मायावन्तः । व्रीह्यादित्यादिनिप्रत्ययः । न भवन्ति । अत्रैवार्थान्तरं न्यस्यति—प्रविश्येति । शठाः—अपकारिणो धूर्ताः । (तेन प्रकारेण तथा, तथा विधा येषां ते तथाविधाः, तान्) तथाविधान्—अकुटिलान् । (न संवृतानि अङ्गानि यैस्ते, तान्) असंवृताङ्गान्—अवर्मितशरीरान् । निशिता इषव इव प्रविश्य—प्रवेशं कृत्वा । आत्मीया भूत्वा । घ्नन्ति हि । आर्जवं हि कुटिलेषु न नीतिरिति भावः ॥३०॥

  

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः, किन्तु स्वोपेक्षादोषमूलत्वादित्या-शयेनाह—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥३१॥

अन्वयः—अनुरक्तसाधनः, कुलाभिमानी, त्वत्, अन्यः, क, इव, नराधिपः, गुणानुरक्तां, कुलजां, मनोरमां, आत्मवधूम्, इव (गुणानुरक्तां, कुलजां, मनोरमां) श्रियम्, अपहारयेत् ॥

भावार्थः—जिसके सभी साधन (सहायक) अनुकूल हों, जिसे अपनी वंश-मर्यादा का अभिमान हो ऐसा तुम्हारे सिवा दूसरा कौन सा राजा होगा जो सौन्दर्यादि गुणों पर मुग्ध, सत्कुल में उत्पन्न और सुन्दरी अपनी भार्या की तरह सन्धि-विग्रहादि गुणों से प्रसन्न, वंशपरम्परा से प्राप्त, मनोनुकूल राज्यलक्ष्मी का दूसरों से हरण करवाए ॥३१॥

गुणेति। (अनुरक्तानि साधनानि यस्यासौ) अनुरक्तसाधनः—अनुकूलसहायवान्। उक्तं च कामन्दकीये—'उद्योगादनिवृत्तस्य ससहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी' इति। (कुलस्य अभिमानः कुलाभिमानः सोऽस्यास्तीति) कुलाभिमानी—क्षत्रियत्वाभिमानी, कुलीनत्वाभिमानी च। (त्वत्तः अन्यः) त्वदन्यः—त्वत्तोऽन्यः। 'अन्यारात्—' इत्यादिना पञ्चमी। क इव नराधिपः (—राजा)—गुणैः सन्ध्यादिभिः, सौन्दर्यादिभिश्च अनुरागिणीं। (कुले जायते इति कुलजा, तां) कुलजां—कुलक्रमादागतां कुलीनां च। मनोरमां (—मनोनुकूलां) श्रियम् (—राज्यलक्ष्मीं) (आत्मनः वधूः, तां) आत्मवधूमिव—स्वभार्यामिव। 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः। परैः—शत्रुभिरन्यैश्च। अपहारयेत्—स्वयमेवापहारं कारयेदित्यर्थः। कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः॥ ३१ ॥

अथ दशभिः कोपोद्दीपनं करोति—

भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ।।३२।

अन्वयः—नरदेव ! एतर्हि, मनस्विगर्हिते, वर्त्मनि, विवर्तमानं, भवन्तम्, उदीरितः, मन्युः, शुष्कं, शमीतरुम्, उच्छिखः, वह्निः, इव, कथं, न, ज्वलयति ?

भावार्थः—हे राजन् ! उठती लपटों वाला अग्नि जिस प्रकार सूखे शमीवृक्ष को जला देता है उसी प्रकार इस समय शूरजन जिस मार्ग में चलना निन्दनीय समझते हैं उसी पर चलकर दुर्दशा भोगते हुए आप को उद्दीप्त हुआ क्रोध जला क्यों नहीं देता ? ।।३२।।

भवन्तमिति । हे नरदेव—नरेन्द्र ! एतर्हि—इदानीम् । अस्मिन्नापत्कालेऽपीत्यर्थः । 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः । 'इदमो र्हिल्' इति र्हिल्प्रत्ययः । 'एतेतौ रथोः' इत्येतादेशः ।

आपदमेवाह—मनस्वीति । (प्रशस्तं मनः अस्ति येषां ते मनस्विनः, गर्हा संजाता अस्य गर्हितम्, मनस्विभिः गर्हितम्, तस्मिन्) मनस्विगर्हिते—शूरजनजुगुप्सिते । वर्त्मनि—मार्गे । (विवर्त्तते इति विवर्त्तमानः तम्) विवर्त्तमानम्—शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः । भवन्तं—त्वाम् । उदीरितः—उद्दीपितः । मन्युः—क्रोधः । शुष्कं—नीरसम् । 'शुषः कः' इति निष्ठातकारस्य ककारः । (शमी तरुं) शमी चासौ तरुश्चेति विशेषणसमासः । तम् । शमीग्रहणं शीघ्रज्वलनस्वभावात्कृतम् । (उद्गता शिखा यस्य सः) उच्छिखः—उद्गतज्वालः । 'घृणिज्वाले अपि शिखे', इत्यमरः । वह्निरिव कथं न ज्वलयति । ज्वलयितुमुचितमित्यर्थः । 'मितां ह्रस्वः' ।। ३२ ।।

नन्वन्तःशत्रुत्वादयं क्रोधस्त्याज्य एवेत्याशङ्क्याह—

अबन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ।।३३।।

अन्वयः—अबन्ध्यकोपस्य, आपदां, विहन्तुः, देहिनः, स्वयम्, एव, वश्याः, भवन्ति, अमर्षशून्येन, जन्तुना, जातहार्देन (सता), जनस्य, आदरः, न, विद्विषा, (सता), दरः न ॥

भाषार्थः—जिस व्यक्ति का क्रोध निष्फल नहीं होता एवं जो क्रोध आने पर अपराधियों को दण्ड दे सकने में समर्थ है, सभी प्राणी उसके अधीन स्वयं हो जाते हैं। किन्तु जो क्रोध आने पर भी कुछ नहीं कर सकता उसके स्नेह करने से कुछ लाभ नहीं होता और उसकी शत्रुता से कोई भय नहीं लगता ॥३३॥

अबन्ध्येति। (न बन्ध्यः अबन्ध्यः) अबन्ध्यः कोपो यस्य तस्याबन्ध्यकोपस्य (—अव्यर्थक्रोधस्य)। अतएव। आपदां (—अनिष्टानां) विहन्तुः (—विनाशकस्य), निग्रहानुग्रहसमर्थस्येत्यर्थः। पुंस इति शेषः। देहिनः—जन्तवः। स्वयमेव (—आत्मनैव)। वश्याः—वशङ्गताः। भवन्ति। 'वशंगतः' इति यत् प्रत्ययः। अतस्त्वया कोपिना भवितव्यमित्यर्थः। व्यतिरेके स्वनिष्टमाचष्टे—(अमर्षेण शून्यः, तेन) अमर्षशून्येन—निष्कोपेन। जन्तुना (—जीवेन)। कन्यया शोक इतिवत् 'हेतौ' इति तृतीया। हृदयस्य कर्म हार्दं—स्नेहः। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः। युवादित्वात् 'हृदयस्य हृल्लेख यदण्लासेषु' इति हृदादेशः। (जातं हार्दं यस्य, तेन) जातहार्देन—जातस्नेहेन सता। जनस्य—लोकस्य। आदरः (—सम्माननना) न। विद्विषा (—शत्रुणा) च सताऽऽदरः। न। अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्यावित्यर्थः। अथवा विद्विषा सता दरो—भयं न। 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। एतस्मिन्नेव प्रयोगे सन्धिवशाद् द्विधा पदच्छेदः। पुंवाक्येषु न दोषः। अतः स्थाने कोपः कार्यस्त्याज्यस्त्वस्थाने कोप इति भावः ॥ ३३ ॥

परिभ्रमंल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥३४॥

अन्वयः—लोहितचन्दनोचितः, महारथः, अयं वृकोदरः, रेणुरूषितः

(सन्) पदातिः, अन्तर्गिरि, परिभ्रमन्, सत्यधनस्य, मानसं, नो दुनोति, कच्चित् ॥

भावार्थः—जो भीमसेन पहिले शरीर में लाल चन्दन मला करता था और बड़े-बड़े रथों में बैठ कर चला करता था, वही आज धूलि से सना हुआ पहाड़ों में इधर से उधर पैदल ही भटक रहा है। सत्य को ही सर्वस्व मानने वाले आप के चित्त को इससे कुछ भी दुःख नहीं होता है क्या ? ३४॥

घण्टापथः—परिभ्रमन्निति। (लोहितं च तच्चन्दनं च लोहितचन्दनं, तेन उचितः) लोहितचन्दनोचितः—उचितलोहितचन्दनः। 'वाहिताग्न्यादिषु' इति साधुः। अभ्यस्तरक्तचन्दन इत्यर्थः। "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः। महारथः—रथचारी। उभयत्रापि प्रागितिशेषः। अद्य तु (रेणुभी रूषितः) रेणुरूषितः—धूलिच्छुरितः। पादाभ्यामतति गच्छतीति पदातिः—पादचारी। 'अज्यतिभ्यां च' इत्यनुवृत्तौ 'पादे च' इत्यौणादिक इन्प्रत्ययः। 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः। अन्तर्गिरि—गिरिष्वन्तः। विभक्त्यर्थेऽव्ययीभावः। 'गिरेश्च सेनकस्य' इति विकल्पात् समासान्ताभावः। परिभ्रमन् (—पर्यटन्) अयं वृकोदरः—भीमः। (सत्यमेव धनं यस्य, तस्य) सत्यधनस्य (—सत्यमेव वित्तं मन्यमानस्य) इति सोल्लुण्ठवचनम्। अद्यापि सत्यमेव रक्ष्यते न तु भ्रातर इति भावः। तवेति शेषः। मानसं (—चेतः) नो दुनोति कच्चित्—न परितापयति ? 'कच्चित् कामप्रवेदने' इत्यमरः। स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४ ॥

विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः।
स वल्कवासांसि तवाधुना हरन् करोति मन्युं न कथं धनञ्जयः।३५।

अन्वयः—वासवोपमः, यः, उत्तरान्, कुरून्, विजित्य, प्राज्यम्, अकुप्यं, वसु, अयच्छत्, स, धनञ्जयः, अधुना, वल्कवासांसि, आहरन्, तव, मन्युं, कथं, न करोति ॥

भावार्थः—युद्ध के समय इन्द्र के समान पराक्रमी जिस अर्जुन ने सारे

उत्तर कुरुदेशों को जीतकर असंख्य सुवर्ण रत्नादि वहुमूल्य द्रव्य लाकर तुम्हें दिये थे वही धनञ्जय आज पेड़ों की छाल पहनने के लिये ला रहा है। इसकी ऐसी दशा देखकर भी तुम्हारा क्रोध कौरवों पर क्यों नहीं उमड़ता ? ।।३५।।

विजित्येति । वासवः इन्द्रः उपमा—उपमानं यस्य स वासवोपमः—इन्द्रतुल्यः, यः—धनञ्जयः, उत्तरान् कुरून्—मेरोरुत्तरान् मानुषान् देशविशेषान् । विजित्य (—जित्वा) प्राज्यं—प्रभूतं । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । कुप्यादन्यद् अकुप्यं—हेमरूप्यात्मकं । 'स्यात्कोशश्च हिरण्यञ्च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरः । वसु—धनम्, अयच्छत्—दत्तवान् । 'पाघ्रा—' इत्यादिना दाणो यच्छादेशः । स धनं जयतीति धनञ्जयः—अर्जुनः । 'संज्ञाया भृतवृजि—' इत्यादिना खच् प्रत्ययः। 'अरुर्द्विषत्—' इत्यादिना मुमागमः । अधुना—अस्मिन् काले । 'अधुना' इति निपातनात् साधुः । तव (वल्कान्येव वासांसि ) वल्कवासांसि (—वृक्षत्वक्रूपाणि वस्त्राणि) आहरन् (—आनयन्) कथं, मन्युं—क्रोधं दुःखं वा न करोति ।। ३५ ।।

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ।३६।

अन्वयः—वनान्तशय्याकठिनीकृताकृती, विष्वक्, कचाचितौ, अगजौ, गजौ, इव, एतौ, यमौ, विलोकयन्, त्वं, धृतिसंयमौ, बाधितुं, कथं, न उत्सहसे ।।

भाषार्थः—जंगलों के अन्दर विना विछौने की शय्या पर सोने से जिनका शरीर कठोर हो गया है और इधर उधर विखरे वालों वाले इन पर्वतीय हाथियों के से यमल नकुल-सहदेव को देखकर भी तुम अपने संतोष और धैर्य को छोड़ने के लिए उद्यत क्यों नहीं होते ? ।।३६।।

वनान्तेति—वनान्तः—वनभूमिरेव, शय्या (—शयनम्) तया (न कठिना अकठिना, अकठिना कठिना संपद्यमाना कृता इति, कठिनीकृता, कठिनीकृता आकृतिः ययोस्तौ) कठिनीकृताकृती—कठिनीकृतदेहौ

'आकारो देह आकृतिः' इति वैजयन्ती। विष्वक्—समन्तात्। "समन्ततस्तु परितःसर्वतो विष्वगित्यपि" इत्यमरः। (कचैः आचितौ) कचाचितौ—कचव्याप्तौ, विशीर्णकेशावित्यर्थः। अत एव (अगे जातौ) अगजौ—गिरिसम्भवौ, गजौ—(—करिणौ) इव स्थितौ। एतौ यमौ—युग्मजातौ, माद्रीपुत्रावित्यर्थः। 'यमो दण्डधरे ध्वांङ्क्षे संयमे यमजेऽपि च' इति विश्वः। विलोकयन् (—पश्यन्) त्वं। कथं (धृतिश्च संयमश्च) धृतिसंयमौ—सन्तोषनियमौ। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः। बाधितुं (—परित्यक्तुं) नोत्सहसे—न प्रवर्तसे। ""शकधृष—" इत्यादिना तुमुन्। अहो ते महद्धैर्यमिति भावः॥ ३६॥

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः।३७।

अन्वयः—अहम्, इमां, तावकीं, धियं, न वेद, चित्तवृत्तयः, विचित्ररूपाः, खलु, परां, भवदापदं, विचिन्तयन्त्याः, मम, आधयः, चेतः, प्रसभं रुजन्ति॥

भावार्थः—आपकी बुद्धि ऐसी क्यों हो गई, मैं समझ नहीं पाती, क्योंकि मनुष्यों की चित्तवृत्तियाँ विचित्र प्रकार की होती हैं। किन्तु आपकी इस महती दुर्दशा का विचार करके मेरा मन तो मानसिक व्यथाओं से टूट रहा है। (फिर भी आप धैर्य रखे हैं। महान् आश्चर्य है!) ॥३७॥

इमामिति। इमां—वर्तमानां, तव इमां तावकीं—त्वदीयाम्, 'तस्येदम्' इत्यण् प्रत्ययः। 'तवकममकावेकवचने' इति तवकादेशः। धियं—त्वदापद्विषयां चित्तवृत्तिम्, अहं न वेद—कीदृशी वा न वेद्मि। 'विदो लटो वा' इति णलादेशः। नचात्मपरबुद्धेरप्रत्यक्षत्वादितिभावः। दुःखित्वमनुमातुं शक्यते। धीरादिष्वनैकान्तिकत्वादृष्टान्तेनापन्नत्वाद् दित्याशयेनाह—(चित्तानां वृत्तयः) चित्तवृत्तयः (—मनोव्यापाराः) विचित्राणि रूपाणि यासां ताः) विचित्ररूपाः—धीराधीराद्यनेकप्रकाराः खलु।

  

किन्तु पराम्—उत्कृष्टां। (भवतः आपत्, तां) भवदापदं, विचिन्तयन्त्याः—भावयन्त्याः, मम चेतः—चित्तम्। आधयः—मनोव्यथाः। 'उपसर्गे घोः किः' इति किप्रत्ययः। प्रसभं—प्रसह्य, रुजन्ति—भञ्जन्ति। 'रुजो भङ्गे' इति धातोर्लट्। पश्यतामपि दुःसहा दुःखजननी त्वद्विपत्तिरनुभवितारं त्वां न विकरोति इति महच्चित्रमित्यर्थः। चेत इति 'रुजार्थानां भाववचनानामज्वरेः,' इति षष्ठी न भवति। तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति ॥ ३७ ॥

तदापदमेव श्लोकत्रयेणाह—

**पुराऽधिरूढः शयनं महाधनं बिबोध्यसे यः स्तुतिगीतिमङ्गलैः।**
**अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ।।३८।।**

अन्वयः—यः, पुरा, महाधनं, शयनम्, अधिरूढः, स्तुतिगीतिमङ्गलैः, विबोध्यसे, स, अदभ्रदर्भां, स्थलीं, अधिशय्य, अशिवैः, शिवारुतैः, निद्रां, जहासि।

भाषार्थः—पूर्वकाल में वहुमूल्य कोमल शय्या पर सोने वाले आप प्रातःकाल वैतालिकों द्वारा गाई गई विरुदावली और स्तुतिगान-रूप मङ्गलाचरणों से जगाए जाते थे पर आज आप अत्यधिक कुशमयी भूमि पर सोये हुए अमङ्गलकारी सियारों की हुआ-हुआ ध्वनि से जागते हो ॥३८॥

पुरेति। यस्त्वं—महाधनं—वहुमूल्यं। श्रेष्ठम्। 'महाधनं महामूल्ये' इति विश्वः। शयनं—शय्याम्। अधिरूढः सन्। स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः (स्तुतिगीतिमङ्गलैः—स्तोत्रगानादिमधुरध्वनिभिः) पुरा विबोध्यसे—(वैतालकैरिति शेषः) पूर्वं बोधित इत्यर्थः। 'पुरि लुङ् चाऽस्मे' इति भूतार्थे लट्। सः—त्वम्—(अदभ्राः दर्भाः यस्यां सा, तां) अदभ्रदर्भां—बहुकुशाम्। 'अस्त्री कुशं कुशो दर्भः' इति। 'अदभ्रं बहुलं बहु' इति चाऽमरः। स्थलीम्—अकृत्रिमभूमिम्। 'जानपद'—इत्यादिनाऽकृत्रिमार्थे ङीप्। एतेन दुःसहस्पर्शत्वमुक्तम्। 'अधिशीङ्स्थासां कर्म'

इति कर्मत्वम् । अधिशय्य---शयित्वा । 'अयङ्यि क्ङिति' इत्ययङादेशः । अशिवैः---अमङ्गलैः । शिवारुतैः---क्रोष्टुवाशितैः, 'शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्युभे' इति वैजयन्ती । निद्रां जहासि । 'अद्य' इतिशेषः॥३८॥

पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥३९॥

अन्वयः---नृप, यत्, एतत्, (ते वपुः) पुरा, द्विजातिशेषेण, अन्धसा रामणीयकम्, उपनीतम्, अद्य, वन्यफलाशिनः, ते, तद्, वपुः, यशसा, समं, परं, कार्श्यम्, परैति ॥

भाषार्थः---हे राजन् ! पहले (जब तुम राजा थे तब) सम्मानपूर्वक ब्राह्मणों को भोजन कराने के बाद बचे हुए अन्न को खाने से जो तुम्हारा शरीर अत्यन्त रमणीय लगता था, आज जंगली फलों पर गुजर करते हुए तुम्हारा वही शरीर क्षीण होता जा रहा है, और साथ ही इस दुर्दशा के कारण तुम्हारी कीर्ति भी कम होती जा रही है ॥३९॥

पुरेति । हे नृप ! यदेतत्---पुरोवर्ति वपुः पुरा (द्वे जाती येषां ते द्विजातयः, तेभ्यः शेषं, तेन) द्विजातिशेषेण---द्विजभुक्तावशिष्टेन । अन्धसा---अन्नेन । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । रमणीयस्य भावो रामणीयकं---मनोहरत्वम् । उपनीतं---प्रापितम् । नयतेर्द्विकर्मकत्वा-त्प्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । अद्य (वने भवानि वन्यानि, वन्यानि च तानि फलानि वन्यफलानि, तानि अश्नाति---भुनक्तीति वन्यफलाशी, तस्य) वन्यफलाशिनस्ते---तव । तद्---वपुः । यशसा समं---परम्---अतिमात्रं । (कृशस्य भावः) कार्श्यं (---दुर्बलतां) परैति---प्राप्नोति । उभयमपि क्षीयते इत्यर्थः । सहोक्तिर-लङ्कारः । तदुक्तं काव्यप्रकाशे---'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाच-कम्' इति ॥ ३९ ॥

अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥४०॥

अन्वयः—अनारतं, मणिपीठशायिनौ, यौ, (ते चरणौ) राजशिरःस्रजां, रजः, अरञ्जयत्, तौ, ते, चरणौ, मृगद्विजालूनशिखेषु, बर्हिणां, वनेषु, निषीदतः ॥

भावार्थः—निरन्तर रत्नजटित पीठ पर विराजमान तुम्हारे जो चरण प्रणाम करते हुए राजाओं के माथे पर की मालाओं से झरते हुए पराग से रंग जाते थे, वे ही आज हरिणों और तपस्वियों से काटी गई कुशाओं से भरे वनों में विश्राम पाते हैं ॥४०॥

अनारतमिति । अनारतम्—अजस्रम् । (मणीनां पीठं मणिपीठं, मणिपीठे शयाते तच्छीलौ, तौ) मणिपीठशायिनौ—मणिमयपादपीठस्थायिनौ । यौ—चरणौ । (राज्ञां शिरसि, तेषां स्रजः, तेषां) राजशिरःस्रजां—नमद्भूपालमौलिस्रजां । रजः—परागः—अरञ्जयत् । तौ ते चरणौ-मृगैः (—हरिणैः) द्विजैश्च—तपस्विभिश्च (आलूना शिखा येषां ते, तेषु) आलूनशिखेषु—छिन्नाग्रेषु । बर्हिषां—कुशानाम् ॥ 'बर्हिः कुशहुताशयोः' इति विश्वः । वनेषु निषीदतः—तिष्ठतः ॥ ४० ॥

द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥४१॥

अन्वयः—यत्, इयं, दशा, द्विषन्निमित्ता, ततः, मे, मनः, समूलम्, उन्मूलयति, इव, परैः, अपर्यासितवीर्यसम्पदां, मानिनां, पराभवः, अपि, उत्सव, एव, (भवति) ॥

भावार्थः—आपकी यह दशा क्योंकि शत्रुओं के कारण हुई है इसी से मेरे चित्त को जड़ से जैसे उखाड़ रही है। दूसरे जिन्हें परास्त नहीं कर सकते ऐसे स्वाभिमानी जनों पर यदि भाग्यवश कभी विपत्ति आती है तो वे उसे उत्सव जैसा मानकर सह लेते हैं ॥४१॥

द्विषदिति। यत्--यतः कारणात्। इयं दशा—अवस्था। 'दशा वार्तावस्थायाम्' इति विश्वः। द्विषन्तो निमित्तं यस्याः साः (द्विषन्निमित्ता--शत्रुहेतुकी) (द्विषोऽमित्रे' इति शतृप्रत्ययः। अतो मे—मनः। समूलं--प्राऽऽशयम्। उन्मूलयतीव--उत्पाटयतीव। दैविकी त्वापन्न दुःखायेत्याह--परैरिति। परैः--शत्रुभिः। अपर्यासिता—पर्यावर्तितता वीर्यसम्पद्येषां तेषां—मानिनां--पराभवः—विपदपि—उत्सव एवेति वैधर्म्येणार्थान्तरन्यासः। मानहानिः दुःसहा, न त्वापदिति भावः॥ ४१॥

विहाय शान्तिं नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम्।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः॥४२॥

अन्वयः--नृप! शान्तिं, विहाय, तद्, धाम, विद्विषां, वधाय, पुनः, सन्धेहि, प्रसीद, निःस्पृहाः मुनयः, शमेन, शत्रून्, अवधूय, सिद्धिं, व्रजन्ति, भूभृतः, न॥

भावार्थः—हे राजन्! शान्ति को छोड़कर शत्रुओं का नाश करने के लिये उस प्रसिद्ध क्षात्र-तेज को फिर धारण करो। जिन्हें किसी प्रकार की सांसारिक इच्छाएँ नहीं हैं ऐसे मुनिजन इससे मोक्षरूपी सिद्धि पा सकते हैं। पृथ्वी का भार उठाने वाले राजाओं को शान्ति से सिद्धि (विजय) नहीं मिल सकती॥४२॥

विहायेति। हे नृप! शान्तिं विहाय, (—शमं परित्यज्य) तत्—प्रसिद्धं धाम---तेजः---विद्विषां वधाय (—शत्रुविनाशाय) पुनः सन्धेहि---अङ्गीकुरु। प्रसीद। प्रार्थनायां लोट्। ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्यत्राह—व्रजन्तीति। (निर्गता स्पृहा येषां ते) निःस्पृहाः(—निरीहाः) किं मुनयः शमेन--क्रोधवर्जनेन, शत्रूनवधूय—निर्जित्य, सिद्धिं व्रजन्ति। कैवल्यकार्यवद्राजकार्यं (भुवं बिभर्तीति) भूभृतः (--राजानः) तु न, शान्तिसाध्यमित्यर्थः॥ ४२॥

पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम्।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता॥४३॥

  

अन्वयः—धामवतां, पुरस्सराः, यशोधनाः, भवादृशाः ईदृशं, सुदुःसहं, निकारं, प्राप्य, रतिम्, अधिकुर्वते, चेत्, हन्त, मनस्विता, निराश्रया (सती), हता ॥

भाषार्थः—तेजस्वी जनों में अग्रेसर और कीर्ति को ही धन मानने वाले आप जैसे महापुरुष भी यदि शत्रुओं से असह्य तिरस्कार पाकर चुपचाप बैठे रहे, तो दुःख के साथ कहना पड़ता है कि मनस्विता नष्ट हो गई, क्योंकि उसके लिये कोई आश्रय ही नहीं रह जायगा ॥४३॥

पुर इति। किं च—(धाम विद्यते येषां ते धामवन्तः, तेषां) धामवतां—तेजस्विनाम् । परनिकाराऽसहिष्णूनामित्यर्थः । पुरःसन्तीति पुरःसराः—अग्रेसराः । 'परोग्रऽयतोऽग्रेषु सर्तेः' इति टप्रत्ययः । (यशांसि एव धनानि येषां ते) यशोधनाः । भवादृशाः । सुदुःसहम्—अतिदुःसहम् । ईदृशम्—उक्तप्रकारं । निकारं —पराभवं । प्राप्य । रतिं—सन्तोषम् । अधिकुर्वते—स्वीकुर्वते, चेत्—तर्हि । हन्तेति खेदे । (प्रशस्तं मनः अस्ति यस्यासौ मनस्वी, तस्य भावः) मनस्विता—अभिमानिता । (निर्गतः आश्रयो यस्याः सा) निराश्रया सती—हता । तेजस्विजनैकशरणत्वान्मनस्वितायाः इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्यासङ्गतेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति, 'प्रसहनं परिभवः' इति काशिका, तथाप्यस्याः कर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः'—इत्यत्मनेपदं प्रसिद्धम् ॥ ४३ ॥

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥४४॥

अन्वयः—अथ, निरस्तविक्रमः (सन्) चिराय, क्षमाम्, एव, सुखस्य, साधनं, पर्येषि (चेत् तर्हि) लक्ष्मीपतिलक्ष्म, कार्मुकं, विहाय, जटाधरः सन्, इह, पावकं, जुहुधि ॥

भाषार्थः—यदि आपका उत्साह शान्त हो गया है और आप सदा के

लिये शान्ति को ही सुख का साधन समझते हैं तो राजाओं के चिह्नभूत इस धनुष को छोड़कर जटाधारी बन जाइये और यहाँ जंगल में रहकर हवन कीजिये ॥४४॥]

अथेति । अथ—पक्षान्तरे । (निरस्त विक्रमो येन सः) निरस्तविक्रमः (—उत्साहहीनः) सन् । चिराय—चिरकालेनापि । क्षमां—क्षान्तिमेव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सुखस्य साधनं पर्येषि—अवगच्छसि, तर्हि (लक्ष्म्याः पतिः, तस्य लक्ष्म) लक्ष्मीपतिलक्ष्म—राजचिह्नं, कार्मुकं (—धनुः) धरतीति धरः । पचाद्यच् । जटानां धरः जटाधरः सन् । इह—वने । पावकं जुहुधि—पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनुषेत्यर्थः । 'हु झल्भ्यो हेर्धिः' ॥४४॥

प्रतिज्ञाभङ्गाद्बिभेषि चेत्तदपि न किंचिदित्याह—

**न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।**
**अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ।४५**

अन्वयः—परेषु, निकृतिपरेषु, भूरिधाम्नः, ते, समयपरिरक्षणं, न, क्षमम्, हि, विजयार्थिनः, क्षितीशाः, अरिषु, सोपधि, सन्धिदूषणानि, विदधति ॥

भावार्थः—जब कि शत्रु निरन्तर तुम्हारे अपकार में लगे हैं तब ऐसी स्थिति में अत्यन्त प्रतापशाली होते हुए, तुम्हारे लिए समय की प्रतीक्षा करना अथवा १३ वर्ष की बाट जोहना उचित नहीं । क्योंकि विजय चाहने वाले राजा शत्रुओं से कपट का व्यवहार करके भी किसी बहाने सन्धियों को तोड़ सकते हैं ॥४५॥

नेति । परेषु—शत्रुषु । निकृतिः परं-प्रधानं येषु तेषु तथोक्तेषु—अपकारतत्परेषु सत्सु । (भूरि धाम यस्यासौ भूरिधामा, तस्य) भूरिधाम्नः—महौजसः—प्रतिकारक्षमस्य । ते—तव । समयः—त्रयोदशसंवत्सरान्वने वत्स्यामीत्येवंरूपा संवित् । 'समयः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । तस्य परिरक्षणं—न क्षमं—(परिपालनं) न युक्तम् । हि—यस्मात् । (विजयमर्थयन्ते 'युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः ।

  

तच्छीलाः) विजयार्थिनः—विजिगीषवः । (क्षितेः ईशाः) क्षितीशाः। अरिषु—विषये । (उपाधिना सहितं) सोपधि—सकपटं यथा तथा। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । (सन्धेः दूषणानि) सन्धिदूषणानि—विदधति—केनचिद् व्याजेन दोषमापाद्य सन्धिं दूषयन्ति। विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा कार्यसाधनं प्रधानमन्यत् समयरक्षणादिकमशक्तस्येति भावः । अर्थान्तरन्यासोऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ४५ ॥

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

अन्वयः—विधिसमयनियोगात्, अगाधे, आपत्पयोधौ, मग्नम्, दीप्तिसंहारजिह्मं, शिथिलवसुं, रिपुतिमिरम्, उदस्य, उदीयमानं, त्वां, दिनादौ (विधिसमयनियोगात् अगाधे आपत्पयोधौ मग्नम् । दीप्तिसंहारजिह्मं, शिथिलवसुं रिपुतिमिरमुदस्योदीयमानं) दिनकृतम्, इव लक्ष्मीः, भूयः, समभ्येतु ॥

भावार्थः—विधाता के बनाये नियम के अनुसार सायंकाल प्रकाश समाप्त होने से किरणों के शिथिल हो जाने पर समुद्र में डूबे हुए और प्रातःकाल फिर अन्धकार-समूह को हटाकर उदय होते हुए सूर्य को जैसे दिनलक्ष्मी पहिले की तरह प्राप्त हो जाती है; (अर्थात् जैसे सूर्य फिर पहले की भाँति चमकने लगता है) उसी प्रकार भाग्यवश या समय के फेर से प्रताप नष्ट हो जाने से विपत्तिरूपी सागर में डूबे हुए और धनहीन हुए आप को भी शत्रुओं को नष्ट करने के लिए उद्यत आपको पुनः पहिले की भाँति राज्यलक्ष्मी प्राप्त हो ॥४६॥

विधीति । विधिः—दैवम् । 'विधिर्विधाने दैवे च' इत्यमरः। समयः—कालः, तयोर्नियोगात्—नियमनाद्धेतोः । तयोर्दुरतिक्रम-

त्वादिति भावः। अगाधे—दुस्तरे। आपत्—पयोधिरिवेत्युपमितसमासः। दिनकृतमिवेति—वक्ष्यमाणानुसारात्। तस्मिन् आपत्पयोधौ, (—विपत्सागरे) मग्नम्। सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः। दीप्तिः—प्रतापः, आतपश्च। तस्याः संहारेण जिह्मं—अप्रसन्नम्। (शिथिलं वसु यस्य सः शिथिलवसुः, तं) शिथिलवसुं—शिथिलधनम्। अन्यत्र शिथिलरश्मिम्। 'वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ' इति पाठे तूभयत्रापि शिथिलशक्तिकमित्यर्थः। रिपुस्तिमिरमिवेति—रिपुतिमिरम्, उदस्य—निरस्य। उदीयमानम्—उद्यतम्। ईङ गतौ' इति धातोर्दैवादिकात्कर्तरि। शानच्। त्वां दिनादौ दिनकृतमिव लक्ष्मीः—भूयः समभ्येतु—भजतु। 'आशिषि लिङ्लोटौ' इति लोट्। चमत्कारकारितया, मङ्गलाचरणरूपया च सर्गान्त्यश्लोकेषु 'लक्ष्मी' शब्दप्रयोगः। यथाह भगवान् भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति। पूर्णोपमेयम्। मालिनी वृत्तम्। सर्गान्तत्वाद्वृत्तभेदः। यथाह दण्डी—'सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः। सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम्॥' इति॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति—इति इत्यादि। इतिशब्दः परिसमाप्तौ। भारविकृताविति—कविनामकथनम्। महाकाव्य इति महच्छब्देन लक्षणसम्पत्तिः सूचिता। किरातार्जुनीय इति—काव्यवर्णनीययोः कथनम्। प्रथमः सर्गः। 'समाप्तः' इति शेषः। एवमुत्तरत्रापि द्रष्टव्यम्। किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम्। 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति द्वन्द्वाच्छप्रत्ययः। राघवपाण्डवीयमितिवत्। तथा ह्यर्जुन एवात्र नायकः। किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः। यथाह दण्डी—'वंशवीर्यप्रतापादि वर्णयित्वा रिपोरपि। तज्जयान्नायकोत्कर्षकथनं च धिनोति नः॥' इति। अथ संग्रहश्लोकः

नेता मध्यमपाण्डवो भगवतो नारायणस्यांशज—
स्तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः।

  

शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलाद्यनि च वर्णितानि च बहुशो दिव्यास्त्रलाभः फलम् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किराता- र्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः ॥१॥

इति महाकविश्रीभारविकृतौ किरातार्जुनीये महाकाव्ये घण्टापथ-भाषा- नुवादसहिते प्रथमः सर्गः ॥

---

# अलंकारदर्पण

१. अनुप्रास

अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।

साहित्यदर्पण, १०, ३.

स्वर की विषमता रहने पर भी शब्द के साम्य (सादृश्य) को 'अनुप्रास' कहते हैं ।

उदाहरण

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥

रघुवंश, १,८२

यहाँ 'होतुराहुति', 'अनिन्द्या नन्दिनी', 'आववृते वनात्' में क्रमशः ह त, न द, और व व की समानता से 'अनुप्रास' अलङ्कार है ।

अथवा

आदाय बकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान् ।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥

सा० द०, १०,३

[ वकुल के गन्ध को लेकर, पद-पद में भ्रमरों को मद से अन्धा करता हुआ, कावेरी नदी के जलकणों से युक्त होने के कारण पवित्र करने वाला यह पवन धीरे-धीरे चला आ रहा है ।]

यहाँ 'गन्धानन्धी' में नकार तथा धकार, 'कावेरीवारि' में वकार तथा रकार 'पावनः पवनः' में पकार तथा वकार की समानता से 'अनुप्रास' अलङ्कार है ।

२. यमक

सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥

साहित्यदर्पण, १०,८

यदि अर्थवान् हो तो भिन्न अर्थ वाले स्वर-व्यञ्जन-समुदाय की उसी क्रम से आवृत्ति को 'यमक' कहते हैं।

उदाहरण

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥

रघुवंश, १,५९

प्रस्तुत उदाहरण में पुरः पुरः दोनों पद सार्थक हैं परन्तु उनके अर्थ क्रमशः 'नगर' और 'सामने' भिन्न-भिन्न हैं। इस प्रकार भिन्नार्थक 'पुरः' इस स्वरव्यञ्जन समुदाय की उसी क्रम से आवृत्ति होने के कारण 'यमक' अलङ्कार है।

अथवा

नवपलाश-पलाशवनं पुरः स्फुटपराग-परागत-पंकजम् ।
मृदुल-तान्त-लतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः॥

सा० द०, १०,८

[जिसमें पलाशों (ढाकों) का वन नवीन पलाशों (पत्तों) से युक्त हो गया है, और कमल बढ़े हुए पराग (फूलों की धूल) से परागत (युक्त) हो गये हैं, एवं लतान्त (लताओं के प्रान्त भाग) जिसमें मृदुल (कोमल) और तान्त (विस्तृत अथवा झुके प्रान्त भाग) हो गये हैं पुष्पों की अधिकता से सुरभि (सुगन्धित) उस सुरभि (वसन्त ऋतु) को श्री कृष्ण ने रैवतक पर्वत पर देखा।]

यहाँ पलाश (पत्ते) पलाश (ढाक), और सुरभि (वसन्त ऋतु) सुरभि (सुगन्धित) दोनों सार्थक परन्तु भिन्नार्थक पदों की उसी क्रम

से आवृत्ति है। 'लतान्त लतान्त' में पहला 'लतान्त' पद निरर्थक है क्योंकि इसका लकार पूर्ववर्ती 'मृदुल' शब्द से मिला हैं। 'पराग पराग' में दूसरा 'पराग' पद निरर्थक है क्योंकि इसमें परवर्ती 'गत' शब्द का गकार मिलाया गया है। अतः यमक अलङ्कार है।

३. श्लेष

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।**

सा० द०, १०,११.

श्लिष्ट पदों से अनेक अर्थों का अभिधान होने पर 'श्लेष' अलङ्कार होता है।

उदाहरण

**कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः।**
**तवाभिधानाद्व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः॥**

कि० अ०, १,२४.

प्रस्तुत उदाहरण में 'कथा प्रसङ्ग', 'विक्रम', तथा 'तव' श्लिष्ट पदों से वार्तालाप और विषवैद्य; बल और पक्षी का प्रहार; तेरा, और तार्क्ष्य (गरुड़) तथा वासुकि (सर्प) रूपी अनेक अर्थों का अभिधान होने के कारण 'श्लेष अलङ्कार' है।

अथवा

**विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।**
**तव दत्तां सदामोदं लसत्तरलहारिणी॥**

सा० द० १०,११.

[उस तन्वी के विलासयुक्त, चञ्चल और मनोहारी दोनों खिले हुए नेत्र-रूपी कमल तथा सुशोभित, तरल (मध्य मणि) से युक्त मोतियों के हार वाले उसके दोनों स्तन तुम्हें सदा आनन्द दें।]

यहाँ 'लसत्तरलहारिणी' पद में श्लेष है, क्योंकि इसके दो अर्थ हैं। 'लसत्तरलहारिणी' का नेत्रों से सम्बन्ध होने पर अर्थ होता है है—लसत्=विलास वाले, तरल=चञ्चल, हारिणी=मन को लुभाने वाले और स्तनों के साथ सम्बन्ध जोड़ने पर अर्थ होता है—लसत्=शोभा देने वाले तरल=बीच की मणि, हारिणी=हार वाले। इस प्रकार 'तरल' आदि शब्दों से अनेक अर्थों का अभिधान होने के कारण यहाँ 'श्लेष अलङ्कार' है।

४. उपमा

'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।'

सा० द०, १०,१४.

एक वाक्य में दो पदार्थों के, वैधर्म्यरहित, वाच्य सादृश्य को 'उपमा' कहते हैं।

उदाहरण

सौरभमम्भोरुहवन्मुखस्य, कुम्भाविव स्तनौ पीनौ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले॥

सा० द० १०,१४.

[तुम्हारे मुख की सुगन्ध कमल की सी है। तुम्हारे स्तन कुम्भ के समान पीन हैं। हे बाले, शरद् ऋतु के चन्द्रमा जैसा तुम्हारा मुख हृदय को मत्त करता है।]

यहाँ—मुख की सुगन्ध (उपमेय), कमल की सुगन्ध (उपमान); तथा स्तन (उपमेय), कुम्भ (उपमान); और मुख (उपमेय), शरद् चन्द्र (उपमान)—परस्पर भिन्न पदार्थों की समानता के वाच्य होने से 'उपमा' अलङ्कार है।

अथवा

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्॥

शाकु० ५,१३.

यहाँ शकुन्तला और किसलय दो पदार्थों की समानता के वाच्य होने के कारण 'उपमा' अलङ्कार है।

५. रूपक

रूपकं रूपितारोपो विषये निरपह्नवे

सा० द० १०,२८

निरपह्नव अर्थात्-निषेध रहित विषय (उपमेय) में रूपित (अपह्नवभेद उपमान) के आरोप को 'रूपक अलङ्कार' कहते हैं।

उदाहरण

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥

किरात० १,४६.

प्रस्तुत उदाहरण में आपत्ति पर पयोधि का तथा रिपु उपमेय पर तिमिर उपमान का आरोप होने के कारण 'रूपक अलङ्कार' है।

अथवा

लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् ।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ॥

सा० द० १०,३२.

[लावण्यरूप मधु (पुष्परस) से पूर्ण इसका खिला हुआ मुख लोगों के किन नेत्ररूपी भ्रमरों से नहीं पिया जाता ?]

यहाँ विषय (उपमेय)=लावण्य और नेत्र पर, उपमान=मधु और भ्रमर-के आरोप के कारण 'रूपक अलङ्कार' है।

६. सन्देह

सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।

सा० द० १०,३५

  

प्रकृत अर्थात् उपमेय में 'अन्य' अर्थात् उपमान के ·ंशय को 'संदेह-अलङ्कार' कहते हैं।

**उदाहरण**

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत् फलमेव पुण्यम् ।
असन्निवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः ॥

शाकु० ६,१०.

यहाँ 'शकुन्तला मिलन' उपमेय में, स्वप्न, माया, आदि उपमानों का संशय होने के कारण संदेह अलङ्कार है।

अथवा

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥

सा०द० १०, ३५.

[रस की अधिकता के कारण खिली हुई यौवन रूपी वृक्ष की क्या यह नवीन मञ्जरी है? अथवा वेला (समुद्रतट) तक उछलते हुए लावण्य सागर की यह लहर है? या बढ़ी हुई उमंगों वाले पुरुषों को अपने सिद्धान्तों (कामशस्त्र के व्यवहारों) की शिक्षा देने में तत्पर शृङ्गार के अधिष्ठातृदेव (कामदेव) की यह उपदेश-यष्टि है।]

यहाँ उपमेय=नायिका में, उपमान=नवीन मञ्जरी आदि का संशय होने से अर्थात् किसी सुन्दरी के वर्णन के संशय में ही समाप्त होने से सन्देह अलङ्कार है।

  

७. उत्प्रेक्षा

भवेत् संभावनोत्प्रेक्षा प्रकृतस्य परात्मना।

सा० द० १०,४०.

किसी प्रस्तुत वस्तु की अप्रस्तुत के रूप में संभावना करने को 'उत्प्रेक्षा अलङ्कार' कहते हैं।

उदाहरण

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने।
भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य॥

शाकु० ५,२३

यहाँ प्रस्तुत=शकुन्तला की तिरछी भौहों की अप्रस्तुत=कामदेव के धनुष के रूप में संभावना करने से 'उत्प्रेक्षा अलङ्कार' है।

अथवा

ऊरुः कुरङ्गदृशश्चञ्चलचेलाञ्चलो भाति।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव।

सा० द० १०,१४.

(चञ्चल वस्त्राञ्चल से रमणीय, मृग के समान सुन्दर नेत्रों वाली कामिनी का ऊरु ऐसे मालूम होता है मानो कामदेव का, पताका से सजा हुआ, सोने का बना विजय-स्तम्भ हो।)

यहाँ प्रस्तुत=कामिनी के ऊरु की अप्रस्तुत=कामदेव के विजय-स्तम्भ के रूप में सम्भावना की गई है। अतः 'उत्प्रेक्षा अलङ्कार है।'

८. दृष्टान्त

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।

सा० द० १०,१५.

दो वाक्यों में धर्म सहित 'वस्तु' अर्थात् उपमानोपमेय के प्रतिविम्ब को 'दृष्टान्त अलङ्कार' कहते हैं।

उदाहरण

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥

शाकुन्तल

यहाँ पर दोनों वाक्यों में, इन्द्र और दुष्यन्त रूप उपमेय तथा सूर्य और चन्द्र रूप उपमान के प्रतिविम्बन से 'दृष्टान्त अलङ्कार' है।

अथवा

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥

सा०द० १०,५१.

[अच्छे कवि की उक्ति के गुण चाहे न मालूम हुए हों, तो भी वह केवल सुनने से ही कानों में मधुरस बरसाती है। यह देखा गया है कि दूर होने के कारण मालती की माला की गन्ध चाहे प्रतीत न होती हो तो भी वह दृष्टि को अपनी ओर खींच ही लेती है।]

यहाँ सादृश्यसूचक इवादि शब्दों के प्रयोग के विना भी मालती माला के साथ कवि की सूक्ति का और सुगन्ध के साथ कविता के गुणों का सादृश्य अर्थात् उपमानोपमेयभाव का प्रतिविम्बन है। अतः यहाँ 'दृष्टान्त अलङ्कार' है।

९. तुल्ययोगिता

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।
एकधर्माभिसंबन्धः स्यात्तदा तुल्ययोगिता ॥

सा०द० १०,४८.

केवल प्रकृत या केवल अप्रकृत पदार्थों में एक धर्म के सम्बन्ध का नाम 'तुल्ययोगिता' है।

उदाहरण

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्वी सखी च युवयोरियम् ॥

शाकु० ३,१७

प्रस्तुत उदाहरण में शकुन्तला और पृथ्वी दोनों प्रकृतों का एक धर्म प्रतिष्ठा के साथ सम्बन्ध होने से 'तुल्ययोगिता' अलङ्कार है।

अथवा

तदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥

सा० द० १०,४८

[उस सुन्दरी के अङ्गों की कोमलता देखने वाले, किस (सौन्दर्य-ग्राही) के मन में मालती के पुष्प, चन्द्रमा की कला, और केले के कोमल पत्ते भी कठोर नहीं जँचते ?]

यहाँ मालती चन्द्रमा की कला और केले के कोमल पत्ते इन अप्रस्तुत पदार्थों में कठोरता रूपी एक गुण का सम्बन्ध बताया गया है। अतः यहाँ 'तुल्ययोगिता' अलङ्कार है।

१०. निदर्शना

संभवन्वस्तुसम्बन्धोऽसंभवन्वापि कुत्रचित्।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥

सा० द० १०,५२

जहाँ वस्तुओं का परस्पर सम्बन्ध सम्भव (अबाधित) अथवा असम्भव (बाधित) होकर उनके बिम्ब-प्रतिबिम्ब-भाव का बोध करे वहाँ 'निदर्शना' अलङ्कार होता है।

उदाहरण

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

रघु० व० १,२.

प्रस्तुत उदाहरण में, सीमित ज्ञान वाली बुद्धि से सूर्यवंश का वर्णन और छोटी डोंगी से दुस्तर समुद्र को पार करने की इच्छा इन दो वस्तुओं का परस्पर सम्बन्ध सम्भव अथवा असम्भव होकर उनके बिम्ब-प्रतिबिंब-भाव को बोधित करता है, अतः यहाँ 'निदर्शना' अलङ्कार है।

अथवा

कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः ।
अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥

सा० द० १०,५२

[इस सुन्दरी के कुटिल कटाक्ष का विक्षेप नील कमलों की माला के विलास को धारण करता है और अधरोष्ठ पल्लव की शोभा को एवं मुख चन्द्रमा के विलास को धारण करता है ।]

नील कमलों की माला कटाक्ष में नहीं रह सकती। न ही पल्लव अधरोष्ठ में और चन्द्रमा मुख में। इस प्रकार यहाँ नीलकमलादि तथा कटाक्षादि वस्तुओं का परस्पर सम्बन्ध बाधित होकर उनके बिम्बप्रतिबिम्ब भाव को बोधित करता हुआ, सादृश्य में पर्यवसित होता है। इसीलिए यहाँ 'निदर्शना' अलङ्कार है।

११. अर्थान्तरन्यास

सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यं च कारणेनेदं कार्येण च समर्थ्यते ।
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥

सा० द० १०,६३.

जहाँ (१) विशेष से सामान्य या (२) सामान्य से विशेष अथवा (३) कारण से कार्य या (४) कार्य से कारण साधर्म्य के द्वारा किंवा वैधर्म्य के द्वारा समर्थित होता हो, उसे 'अर्थान्तरन्यास' अलंकार कहते हैं। यह उक्त रीति से चार साधर्म्य और चार वैधर्म्य के भेद होने से आठ प्रकार का होता है।

उदाहरण

तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः
समुन्नयन्भूतिमनार्यसंमाद्वरं विरोधोऽपि समं महात्मभिः ॥

किरात०, १,८.

प्रस्तुत उदाहरण में, 'वह कुटिल दुर्योधन आपको विजित करने की इच्छा से अपने गुणों के द्वारा शुभ्र यश फैला रहा हैं', इस विशेष कथन का 'दुष्ट व्यक्ति की मित्रता की अपेक्षा समृद्धि को बढ़ाती हुई महापुरुषों के साथ की गई शत्रुता भी अच्छी है' इस सामान्य कथन से समर्थन किया गया है, अतः यहाँ सामान्य से विशेष-समर्थन रूप 'अर्थान्तरन्यास' अलङ्कार है।

अथवा

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्यो नगापगा ॥

सा० द० १०,६३.

(बड़े की सहायता पाकर छोटा आदमी भी कार्य पूरा कर लेता है। बड़ी नदी के साथ मिल कर छोटी पहाड़ी नदी भी समुद्र तक पहुँच जाती है।)

यहाँ पूर्वार्ध का 'बड़े की सहायता पाकर छोटा आदमी भी कार्य पूरा कर लेता है' यह अर्थ सामान्य है। इसका समर्थन 'बड़ी नदी के साथ मिलकर छोटी पहाड़ी नदी भी समुद्र तक पहुँच जाती है'—इस उत्तरार्ध

की विशेष घटना के द्वारा साधर्म्य से किया गया है। अतः यहाँ विशेष से सामान्य का समर्थन-रूप 'अर्थान्तरन्यास' अलङ्कार है।

१२. काव्यलिङ्ग

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ॥

सा० द० १०,६४.

वाक्यार्थ अथवा पदार्थ जहाँ किसी का हेतु हो, वहाँ 'काव्यलिङ्ग' अलंकार होता है।

उदाहरण

तत् साधुकृतसन्धानं प्रतिसंहर सायकम्।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

शाकु० १, ११.

प्रस्तुत उदाहरण में 'तुम्हारा शस्त्र आर्तों की रक्षा के लिए है, निरपराधों पर प्रहार करने के लिए नहीं'—यह उत्तरार्ध वाक्य, 'धनुष पर चढ़ाये हुए अपने बाण को उतार लीजिए' इस पूर्वार्ध वाक्य का कारण है, इसलिए यहाँ 'काव्यलिङ्ग' अलङ्कार है।

अथवा

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गताः
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

सा० द० १०,६४.

[हे प्रिये, तुम्हारे नेत्र के समान कान्ति वाले नील कमल पानी में डूब गये। तुम्हारे मुख की छाया का अनुकरण करने वाले चन्द्रमा को बादलों ने ढक लिया और जो तुम्हारी गति के समान गति वाले राज-

हंस थे, वे सब भी (वर्षा के कारण) चले गये। देखो, दैव कितना प्रतिकूल है। तुम्हारे सादृश्य के साथ भी मेरे विनोद को नहीं सहन करता।]

यहाँ पहले तीन चरणों के वाक्यार्थ चौथे चरण के वाक्यार्थ के हेतु के रूप में उपनिबद्ध हैं, अतः यहाँ वाक्यार्थहेतुक 'काव्यलिङ्ग' अलङ्कार है।

१३. उल्लेख

क्वचिद् भेदाद् ग्रहीतॄणां विषयाणां तथा क्वचित्।
एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते॥

सा० द० १०,३७

ग्रहीता अर्थात् ज्ञाताओं के भेद से या विषय अर्थात् हेतु और अवच्छेदक आदि के भेद से एक वस्तु का अनेक प्रकार से 'उल्लेख' (वर्णन या ज्ञान) करना 'उल्लेख' अलङ्कार कहाता है।

उदाहरण

प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः॥

सा० द० १०,३७.

प्रस्तुत उदाहरण में गोपवधू, वृद्ध आदि ज्ञाताओं के भेद से भगवान् श्रीकृष्ण का अनेक प्रकार से उल्लेख किया है, अतः यहाँ 'उल्लेख' अलङ्कार है।

१४. अतिशयोक्ति

सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ।
पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः॥

सा० द० १०,४६-४७.

अध्यवसाय के सिद्ध होने पर 'अतिशयोक्ति' अलङ्कार होता है। (उपमेय का निगरण करके उपमान के साथ उसके अभेदज्ञान को अध्यवसाय कहते हैं।) (१) वास्तविक भेद होने पर भी अभेद वर्णन करने और

(२) वास्तविक सम्बन्ध रहते हुए भी असम्वन्व का कीर्तन करने, इसी प्रकार इन दोनों का विपर्यय अर्थात् (३) अभेद में भेद और (४) असम्बन्ध में सम्वन्ध का कथन करने एवं (५) कार्य और कारणों के पौर्वापर्य (आगे पीछे) के नियम का व्यत्यय (उल्लंघन) करने से पाँच प्रकार की 'अतिशयोक्ति' होती है।

**उदाहरण**

**कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम्।**
**कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात्॥**

सा० द० १०,४७.

[देखो, कैसा आश्चर्य है—सवसे ऊपर मयूर का कलाप (पूँछ) है, उसके नीचे अष्टमी का चन्द्रमा विराजमान है। उसके नीचे दो चपल नीले कमल हैं। उसके नीचे तिल का फूल और उसके नीचे सुन्दर विद्रुम (मूँगे) का खण्ड सुशोभित है।]

यहाँ किसी सुन्दरी के केशपाश (उपमेय) का मयूर पिच्छ (उपमान) के रूप में, उसके मस्तक (उपमेय) का अष्टमी के चन्द्रमा (उपमान) के स्वरूप में, नासिका (उपमेय) का तिलपुष्प (उपमान) के स्वरूप में और अधरोष्ठ (उपमेय) का मूँगे (उपमान) के स्वरूप में अध्यवसान हुआ है, अतः 'अतिशयोक्ति' अलङ्कार है।

अथवा

**गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।**
**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥**

शाकु० १,३४.

प्रस्तुत उदाहरण में शरीर और मन में वास्तविक सम्बन्ध रहते हुए भी शरीर का आगे की ओर जाना और मन का पीछे की ओर दौड़ना कह कर दोनों में असम्बन्ध बताया गया है, अतः यहाँ 'अतिशयोक्ति' अलङ्कार है।

उदाहरण

नेदं नभोमण्डलमम्बुराशिर्नैताश्च ताराः नवफेनभङ्गाः ।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥
सा०द० १०, ३९.

यहाँ प्रकृत नभोमण्डल (आकाश) आदि के स्वरूप का निषेध द्वारा अपह्नव किया है और फिर उसमें समुद्र आदि उपमान का आरोप किया गया है, अतः 'अपह्नुति' अलङ्कार है।

---

# छन्दोमञ्जरी

## १. अनुष्टुप् अथवा श्लोक

आठ अक्षर वाले समवृत्तों में से एक समवृत्त 'अनुष्टुप्' है, इसे श्लोक भी कहते हैं। रामायण, महाभारत तथा कुछ पुराणों में इसका अत्यधिक प्रयोग हुआ है। यह संस्कृत का अत्यन्त प्रचलित छन्द है। इसका लक्षण है :—

अनुष्टुप् के सभी चरणों में छठवाँ अक्षर गुरु तथा पांचवाँ लघु होता है। सातवाँ अक्षर दूसरे तथा चौथे चरण में ह्रस्व होता है और पहले तथा तीसरे में दीर्घ होता है।

उदाहरण

| s s
१. वागर्थाविव संपृक्तौ

| s |
२. वागर्थप्रतिपत्तये ।

| s s
३. जगतः पितरौ वन्दे

| s |
४. पार्वतीपरमेश्वरौ ॥

रघुवंश, १,१।

---

१. श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥

## २. आर्या

जिस छन्द की व्यवस्था मात्राओं की गणना से की जाती है, उसे जाति कहते हैं। ऐसे छन्दों में अत्यधिक प्रचलित 'आर्या' है। इसके पहले और तीसरे चरणों में १२ मात्राए, दूसरे चरण में १८ मात्राएँ, और चौथे चरण में १५ मात्राएँ होती हैं।

उदाहरण

S । । S S । । S
१. आ परितोषाद् विदुषां —१२ मात्राएँ

। S । S S । S । S SS
२. न साधु मन्ये प्रयोगविज्ञानं। —१८ „

। । । । । S । S S
३. बलवदपि शिक्षितानां —१२ „

S S S S । S S S
४. आत्मन्यप्रत्ययं चेतः ॥ —१५ „

अभिज्ञानशाकुन्तलम्, १,२.

## ३. उपजाति

उपजाति उस वृत्त को कहते हैं जो इन्द्रवज्रा तथा उपेन्द्रवज्रा के एक ही पद्य (Verse) में मिश्रण से बनता है। जिस वृत्त के प्रत्येक चरण में दो तगण एक जगण, फिर दो गुरु अक्षर होते हैं, उसे इन्द्रवज्रा कहते हैं। उपेन्द्रवज्रा के प्रत्येक चरण में जगण, तगण, जगण तथा दो गुरु होते हैं।

---

२. यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥

३. अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।
इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिम् ॥

  

उदाहरण

ज॰ त॰ ज॰ दो गुरु

। s । s s । । s । s s

ज, त, ज, ग, ग    प्रजाः प्रजाः स्वा इव तन्त्रयित्वा

—११ अक्षर उपेन्द्रवज्रा

। s । s s । । s । s s

" "    निषेवते श्रान्तमना विविक्तम् ।

—११ अक्षर उपेन्द्रवज्रा

s s । s s । । s । s s

त, त, ज, ग, ग    यूथानि संचार्य रविप्रतप्तः

—११अक्षर इन्द्रवज्रा

s s । s s । । s । s s

" "    शीतं दिवा स्थानमिव द्विपेन्द्रः ॥

—११ अक्षर इन्द्रवज्रा

अभिज्ञानशाकुन्तलम् ५,५.

४. वंशस्थ

वंशस्थ वृत्त के प्रत्येक चरण में जगण, तगण, जगण तथा रगण के क्रम से १२ अक्षर होते हैं। इसको वंशस्थविल और वंशस्तनित भी कहते हैं।

उदाहरण

ज, त, ज, र    ज॰ त॰ ज॰ र॰

। s । s s । । s । s । s

तथापि जिह्मः स भवज्जिगीषया

द्विचतु...

तु वंशस्थमुदीरितं जरौ ॥

  

जगण तगण जगण रगण

।ऽ। ऽऽ ।।ऽ।ऽ ।ऽ

तनोति शुभ्रं गुणसम्पदा यशः
समुन्नयन् भूतिमनार्यसंगमाद्
वरं विरोधोऽपि समं महात्मभिः ॥

किरातार्जुनीयम्, १,८.

## ५. शिखरिणी

शिखरिणी के प्रत्येक चरण में यगण मगण नगण सगण भगण, तदनन्तर एक लघु और एक गुरु के क्रम से १७ अक्षर होते हैं। पहले छः अक्षर के बाद और फिर ग्यारह अक्षर के बाद यति होती है।

उदाहरण

य० म० न० स० भ०

।ऽ ऽऽ ऽ ऽ ।।।।।ऽऽ ।। ल०गु०

य,म,न,स,भ,ल,गु इतः प्रत्यादेशात्, स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत् तत्, सविषमिव शल्यं दहति माम् ॥

अभिज्ञानशाकुन्तलम् ६,९.

## ६. शार्दूलविक्रीडित

शार्दूलविक्रीडित के प्रत्येक चरण में मगण, सगण, जगण, सगण,

---

५. रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ॥



६. सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥

तगण, तगण तदनन्तर एक गुरु इस क्रम से १९ अक्षर होते हैं। बारहवें अक्षर के बाद, पहली यति फिर सातवें अक्षर के बाद दूसरी यति होती है।

उदाहरण

म० स० ज० स० त० त० गु०

S S S | | S | S | | | S S S | S S | S

म,स,ज,स, पातुं न प्रथमं व्यवस्यति जलं, युष्मास्वपीतेषु या
त,त,गु नादत्ते प्रियमण्डनापि भवतां, स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये, यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं, सर्वै रनुज्ञायताम्॥

अभिज्ञानशाकुन्तलम्, ४,९.

### ७. मालिनी

मालिनी के प्रत्येक चरण में नगण, नगण, मगण, यगण तथा यगण के क्रम से १५ अक्षर होते हैं। आठवें तथा सातवें अक्षर के बाद यति लगती है।

उदाहरण

न० न० म० य० य०

| | | | | | S S S | S S | S S

न,न,म,य,य, स्वसुखनिरभिलाषः, खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते, वृत्तिरेवंविधैव॥
अनुभवति हि मूर्ध्ना, पादपस्तीव्रमुष्णं।
शमयति परितापं, छायया संश्रितानाम्॥

अभिज्ञानशाकुन्तलम्, ५,७.

---

७. ननमयययुतेयं मालिनी भोगिलोकैः।

 

८. मन्दाक्रान्ता

मन्दाक्रान्ता के प्रत्येक चरण में मगण, भगण, नगण, तगण, तगण और गुरु-गुरु के क्रम से १७ अक्षर होते हैं। पहले चार अक्षर के उपरान्त, तदनन्तर छः अक्षर के उपरान्त फिर सात अक्षर के उपरान्त यति होती है।

उदाहरण

म० भ० न० त० त० गु०गु०

ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

म, भ, न, त, त, गु, गु

कुल्याम्भोभिः, पवनचपलैः, शाखिनो धौतमूलाः
भिन्नो रागः, किसलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति॥

अभिज्ञानशाकुन्तलम्, १,१५.

९. वसन्ततिलका

वसन्ततिलका के प्रत्येक चरण में तगण, भगण, जगण, जगण और दो गुरु के क्रम से १४ अक्षर होते हैं।

उदाहरण

त० भ० ज०ज० गु०गु०

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ

त, भ, ज, ज, गु, गु औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।

---

८. मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मं।
९. उक्ता वसन्ततिलका तभजा जगौ गः।

 


नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥

अभिज्ञानशाकुन्तलम् ५,६.

## १०. द्रुतविलम्बित

द्रुतविलम्बित के प्रत्येक चरण में नगण, भगण भगण और रगण के क्रम से १२ अक्षर होते हैं ।

उदाहरण

न० भ० भ० र०

। । । ऽ । । ऽ । । ऽ । ऽ

न, भ, भ, र

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥

अभिज्ञानशाकुन्तलम्, २,११.

१०.१. ननमयध्वतमाह नभौ भरौ ।

# लघुकौमुद्यां सन्धिप्रकरणम्।

## अच्सन्धिः।

(यण्विधायकं सूत्रम्)

*इको[6] यणचि[1][7] । ६ । १ । ७७ ॥

इकः स्थाने यण् स्यादचि संहितायां विषये। 'सुधी उपास्यः' इति स्थिते।

---

इक इति—इक् के स्थान में यण् आदेश हो अच् परे रहने पर संहिता[1] के विषय में।

'इकः' यह षष्ठ्यन्त पद है। 'षष्ठी स्थाने-योगा' इस परिभाषा के बल पर 'स्थाने' अर्थ किया गया है। 'यण्' यह प्रथमान्त पद है अत एव विधेय है—'असति बाधके प्रथमाया विधेयविभक्तित्वम्' अर्थात् यदि कोई बाधक न हो तो प्रथमा विधेय विभक्ति होती है प्रथमान्त पद विधेय का बोधक होता है—इस सिद्धान्त के आधार पर। 'अचि' यह परसप्तमी है। 'संहितायाम्' का अधिकार आता है। इस प्रकार उक्त अर्थ निकलता है।

उदाहरण के लिये 'सुधी उपास्यः' यह प्रयोग दिया गया है। पर इसमें सन्देह होता है कि यहाँ इक् तीन हैं और तीनों से परे अच् भी है,

---

*सूत्र पर पड़ी अंक संख्याएँ विभक्ति का निर्देश करने के लिए हैं।

१. परन्तु वाक्य में संहिता वक्ता की इच्छा पर निर्भर है।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥'

अर्थ यह है कि एक पद में, धातु और उपसर्ग के योग में और समास में संहिता नित्य है। पर वाक्य में विवक्षा की अपेक्षा रखती है, अर्थात् वक्ता की इच्छा पर निर्भर है।

 


(स्थानिनिमित्तयोरव्यवधाननियामकं परिभाषासूत्रम्)

तस्मिन्निति निर्दिष्टे पूर्वस्य । १ । १ । ६६॥

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ।

---

फिर किसको यण् आदेश किया जाय ? एक इक् है सकार का उत्तरवर्ती उकार, दूसरा है धकारोत्तरवर्ती ईकार और तीसरा है 'उपास्य:' में उकार । प्रथम उकार के आगे अच् है ईकार, ईकार के आगे अच् है उकार और उकार के आगे अच् है पकारोत्तवर्ती आकार । ऐसी दशा में क्या होना चाहिये ? इस निर्णय के लिये आगे परिभाषा दी जाती है ।

तस्मिन्निति—सप्तम्यन्त पद का उच्चारण कर जिस कार्य का विधान किया जाता है, वह कार्य वर्णान्तर से अव्यवहित-व्यवधानरहित (सप्तम्यन्त पद से बोध्य वर्ण से) पूर्व वर्ण के स्थान में होता है ।

इसका तात्पर्य यह है—जिस वर्ण के परे रहते जिस वर्ण को कोई कार्य विधान किया है उन दोनों वर्णों के बीच में कोई दूसरा वर्ण नहीं आना चाहिये । जैसे 'इको यणचि' इस सूत्र से 'अच्' परे रहते 'इक्' को यण् विधान किया गया है, इस लिये इक् और अच् के बीच में कोई दूसरा वर्ण नहीं आना चाहिये ।

'इको यणचि' इस सूत्र में 'अचि' यह सप्तम्यन्त पद कहा गया है—अच् परे रहते हुए कार्य का विधान किया गया है । अत: इस सप्तमी-विभक्त्यन्त पद 'अचि' से जिसका बोध होगा उसमें अन्य वर्ण के व्यवधान से रहित पूर्व वर्ण को ही यण् कार्य होगा । 'सुधी-।-उपास्य:' इस उदाहरण में सकारोत्तरवर्ती उकार और अच्-धकारोत्तरवर्ती ईकार—के बीच में धकार का व्यवधान है, तथा उपास्य: के उकार और पर अच्—पकारोत्तरवर्ती आकार—के बीच में पकार का व्यवधान है अत: दोनों के स्थान में उक्त नियम के अनुसार कार्य नहीं हो सकता । धकारोत्तरवर्ती ईकार से परे

(स्थानिसदृशस्यादेशत्वनियामकं परिभाषासूत्रम्)

[७]स्थानेऽन्तरतमः[१] । १ । १ । ५० ॥

प्रसङ्गे सति सदृशतम[१] आदेशः स्यात् । 'सुध्य्+उपास्य' इति जाते ।

---

जो उपास्यः का अच् है उससे पूर्व ईकार के मध्य में किसी अन्य वर्ण का व्यवधान नहीं, इसलिये धकारोत्तरवर्ती 'ई' को ही यण् हो सकता है।

फिर भी एक सन्देह बना ही रह जाता है कि 'ई' के स्थान में यण् करेंगे तो, परन्तु यण् तो 'य् व् र् ल्' ये चार हैं, इनमें से किसको किया जाय ? इस सन्देह को दूर करने के लिए दूसरी परिभाषा दी जाती है।

**स्थान इति—प्रसङ्ग—**एक स्थानी[२] के स्थान पर कई आदेशों की प्राप्ति-उपस्थित होने पर उनमें जो स्थानी के सबसे अधिक सदृश[३] हो, वह आदेश हो।

---

१. आदेश शब्द का प्रयोग व्याकरण शास्त्र में विशेष अर्थ में किया गया है, अतः इसके विशेष अर्थ को यहाँ स्पष्ट करना आवश्यक है—जो किसी के स्थान में उसको हटाकर होता है उसे आदेश कहते हैं। जैसे—'सुधी—उपास्यः' में 'ई' को हटाकर यकार होता है। यह आदेश है। 'शत्रुवदादेशः' आदेश शत्रु के समान होता है। वह स्थानी को हटाकर वहाँ अपने आप बैठ जाता है। शत्रु जैसा व्यवहार करता है।

२. स्थानी शब्द भी व्याकरण शास्त्र का पारिभाषिक शब्द है, उसकी परिभाषा यहाँ दी जाती है—जिसके स्थान में आदेश होता है उसे स्थानी कहते हैं। जैसे—'सुधी+उपास्यः' में ईकार के स्थान में यण् आदेश होता है। इसलिये यह स्थानी है।

३. **सादृश्य चार प्रकार का होता है—**१. स्थानकृत, २. अर्थकृत, ३ गुणकृत, ४ प्रमाणकृत। जहाँ अनेक प्रकार का सादृश्य प्राप्त हो वहाँ स्थानकृत सादृश्य ही लेना चाहिए। कहा भी है—यत्रानेकविधमान्तर्यं

(यरो द्वित्वविधायकं सूत्रम्)

अनचि[७] च । ८ । ४ । ४७ ॥

अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् ।

(झलां जश्विधायकं सूत्रम्)

झलां[६] जश्[१] झशि[७] । ८ । ४ । ५३ ॥

स्पष्टम् । इति पूर्वधकारस्य दकारः ।

---

यहाँ पर 'य् व् र् ल्' इन चारों में 'य्' ही 'इ' का अधिक सदृश है। क्योंकि 'ई' का स्थान तालु है और यकार का भी । इसलिए ई के स्थान में 'य्' हो जायगा तब 'सुध्य्+उपास्यः' ऐसा हो गया ।

अनचि चेति—अच् से परे यर् को विकल्प[१] से द्वित्व[२] होता है पर यर् के आगे अच् हो तो नहीं होता ।

इति धकारस्येति—इससे धकार को द्वित्व हो गया ।

'सुध्य्+उपास्य.' इस प्रयोग में अच्-सकारोत्तरवर्त्ती उकार-से परे यर् धकार है, उसके आगे अच् भी नहीं है, यकार है जो व्यञ्जन है । अतः धकार को द्वित्व होकर 'सु ध् ध् य्+उपास्यः' ऐसा रूप हो गया ।

झलामिति—झलों को जश् होता है झश् परे रहने पर ।

स्पष्टमिति—वृत्ति के स्थान में 'स्पष्टम्' है । इसका तात्पर्य यह है कि इस सूत्र का अर्थ सरल है, इसमें कहीं से अनुवृत्ति नहीं लानी पड़ती।

---

तत्र स्थानत आन्तर्यं बलीयः' अर्थात् जहां अनेक प्रकार का सादृश्य हो वहाँ स्थानकृत सादृश्य बलवान् माना जाता है। इसलिए इस उदाहरण में स्थानकृत सादृश्य से ही तालु स्थान की समानता होने से—ई के स्थान में यकार आदेश किया गया है ।

१. विकल्प कहते हैं एक पक्ष में कार्य का हो जाना और दूसरे पक्ष में न होना ।

२. द्वित्व—एक को दो करने को कहते हैं ।

(संयुक्ताक्षरान्त्यलोपविधायकं सूत्रम्)

**संयोगान्तस्य[६] लोपः[१] । ८ । २ । २३ ॥**

**संयोगान्तं यत्पदं तदन्त्यस्य लोपः स्यात् ।**

---

'झलाम्' यह षष्ठ्यन्त पद स्थानी का बोधक है। 'जश्' यह प्रथमान्त विधेय का और 'झशि' यह सप्तम्यन्त निमित्त का बोधक है। स्थानी, विधेय (आदेश), और निमित्त इन तीनों ही की आवश्यकता विधिसूत्र में होती है और यहाँ ये तीनों हैं ही। इसलिये अर्थ स्पष्ट है।

**इति पूर्वधकारस्येति**—इससे पहले धकार को दकार हो गया।

'सु ध् ध् य्+उपास्यः' यहाँ पर झल् है पहला धकार, उसके परे झश् है दूसरा धकार। इसलिये प्रथम धकार को दन्तस्थान की समानता के कारण जशों में से दकार होगा। दूसरा धकार भी झल् है पर उससे परे झश् नहीं है। 'य्' झश् प्रत्याहार में नहीं आता है। तब पूर्व धकार के स्थान में दकार किये जाने पर 'सु द् ध् य् उपास्यः' ऐसा रूप बना।

**संयोगेति**—संयोग जिस पद के अन्त में हो उसके अन्त्य अक्षर का लोप हो।

'पदस्य' इस अधिकार सूत्र का इस सूत्र में सम्बन्ध होता है। यह विशेष्य है और 'संयोगान्तस्य' यह विशेषण। इस सूत्र का अर्थ इतना ही है कि 'संयोगान्त पद का लोप हो।' इतना अर्थ होने से सम्पूर्ण पद का लोप प्राप्त है। 'अन्त्य का लोप होता है', यह अर्थ अग्रिम परिभाषा के बल से होता है।

इस प्रकार 'सु द् ध् य् उपास्यः' इस प्रयोग में यकार का लोप प्राप्त होता है।

(षष्ठीनिर्दिष्टस्यान्त्यालस्थानिकत्वनियामकं परिभाषासूत्रम्)

अलोऽन्त्यस्य । १ । १ । ५२ ॥

षष्ठीनिर्दिष्टोऽन्त्यादेशः स्यात् । इति यलोपे प्राप्ते--

(संयोगान्तलोपापवादवार्तिकम्)

(वा०) यणः प्रतिषेधो वाच्यः ।

सुद्ध्युपास्यः, सुध्युपास्यः । मद्ध्वरिः, मध्वरिः । धात्त्रंशः, धात्रंशः । लाक्तृतिः ।

---

अलोऽन्त्येति—षष्ठ्यन्त का उच्चारण कर जहाँ आदेश का विधान किया हो, वहाँ षष्ठ्यन्त के द्वारा उदाहरण में जिसका बोध होता है, उसके अन्तिम वर्ण को आदेश हो ।

पूर्वोक्त अनियम को दूर करने के लिए 'अलोऽन्त्यस्य' परिभाषा है। उसका अर्थ है—'षष्ठ्यन्त का उच्चारण कर जहाँ आदेश विधान किया जाता है वहाँ उस षष्ठ्यन्त पद के द्वारा उदाहरण में जिसका बोध होता है, उसके अन्तिम वर्ण को वह आदेश हो । इस परिभाषा के आधार पर ही 'संयोन्त पद के अन्त का लोप होता है' यह अर्थ पूर्व सूत्र 'संयोगान्तस्य लोपः' का किया गया ।

इति यलोपे इति—इससे यकार का लोप प्राप्त होने पर—

अर्थात् यकार का लोप्त प्राप्त तो हुआ, पर अग्रिम वार्तिक [1]'यणः प्रतिषेधो वाच्यः' ने उसका निषेध कर दिया ।

---

१ वार्तिक का लक्षण है—

'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः ॥' इति ॥

उक्त, अनुक्त तथा दुरुक्त अर्थात् त्रुटिपूर्ण कथन पर जहाँ विचार किया जाता है, उसे वार्तिक कहते हैं ।

(वा) यण इति—संयोगान्त पद के अन्तिम वर्ण यण् का लोप नहीं होता।

'संयोगान्तस्य लोपः' सूत्र पर यह वार्तिक है। इससे यकार का लोप न होगा।

सुद्धयुपास्यः, सुध्युपास्यः—ये सब उदाहरण हैं। इनमें 'सुद्ध्युपास्यः' की सिद्धि का प्रकार बतला दिया गया है। यकार के लोप के निषेध होने पर 'अज्झीनं व्यञ्जनं परेण संयोज्यम्' के अनुसार 'द् ध् य्' को मिला देने पर उक्त रूप की सिद्धि हुई। जिस पक्ष में 'अनचि च' से द्वित्व नहीं हुआ उसमें 'ध् य्' को उकार में मिलाने से 'सुध्युपास्यः' सिद्ध हुआ है।

मद्ध्वरिः, मध्वरिः—'मधु+अरिः' यह सन्धिच्छेद है। इस अवस्था में उकार को वकार यण् हुआ। धकार को विकल्प से द्वित्व और पूर्व धकार को जश् दकार। पुनः संयोगान्तपद होने से अन्त्य वकार का लोप प्राप्त हुआ और पूर्वोक्त 'यणः प्रतिषेधो वाच्यः' इस वार्तिक से उसका निषेध होने पर 'मद्ध्वरिः' ऐसा रूप सिद्ध हुआ। द्वित्त्व के अभावपक्ष में 'मध्वरिः'।

धात्त्रंश,: धात्रंशः—'धातृ+अंशः' इश दशा में तकारोत्तरवर्ती ऋकार इक् के स्थान में यण् रेफ हुआ। यर् तकार को विकल्प से द्वित्व होने पर अन्त्य रेफ का संयोगान्त लोप प्राप्त हुआ। पर उसका निषेध 'यणः प्रतिषेधो वाच्यः' वार्तिक से हुआ, तब धात्त्रंशः' ऐसा प्रयोग सिद्ध हुआ। द्वित्व के अभाव पक्ष में 'धात्रंशः' ऐसा रूप सिद्ध हुआ।

लाकृतिः—लृ+आकृतिः' इस दशा में इक् लृकार-को यण्-लकार-होने से 'लाकृतिः' प्रयोग सिद्ध हुआ।

'सुद्धयुपास्यः' और 'मद्ध्वरिः' प्रयोगों की सिद्धि का प्रकार समान है। 'धात्त्रंशः' में जश् की 'लाकृतिः' में द्वित्व और जश् दोनों-की प्रवृत्ति नहीं होती।

प्रयोगों का अर्थ—सुद्ध्युपास्यः—सुधीभिः विद्वद्भिः, उपास्यः सेव-

(अय्आद्यादेशविधायकं सूत्रम्)

**एचोऽयवायावः[१] । ६ । १ । ७८ ॥**

**एचः क्रमाद् अय्, अव्, आय्, आव् एते स्युरचि ।**

(समसंख्याकस्थान्यादेशानां उक्तक्रमेणैव स्थान्यादेशभावनियामकं सूत्रम)

**यथासंख्यमनुदेशः समानाम् १ । ३ । १० ॥**

**समसम्बन्धी विधिर्यथासंख्यं स्यात् ।**

**हरये । विष्णवे । नायकः । पावकः ।**

---

नीयः' विद्वानों के द्वारा उपासनीय, अर्थात् भगवान् । **मद्ध्वरिः**—'मधोः एतन्नामकस्य राक्षसस्य, अरि–शत्रुः मधुनामक राक्षस के शत्रु, भगवान् विष्णु । **धात्रंशः**—'धातुः ब्रह्मणः, अंशः' ब्रह्मा का भाग । **लाकृतिः**—लृकारस्य, आकृतिः स्वरूपम्' अथवा लृ के आकार के समान जिसका आकार है वह, कृष्ण भगवान् । बांसुरी बजाने के समय उनकी आकृति 'लृ' के जैसी होती है ।

**अन्य उदारहण**—यदि+अपि=**यद्यपि**=यद्यपि । दधि+आनय=**दध्यानय**=दही लाओ । वारि+अस्ति=**वार्यस्ति**=जल है । प्रति+एकम्=**प्रत्येकम्**=हर एक । गौरी+आयाति=**गौर्यायाति**=गौरी आती है । शशी+उदियाय=**शश्युदियाय**=चन्द्रमा निकला । अभि+उदयः=**अभ्युदयः**=उन्नति । वस्तु+अस्ति=वस्त्वस्ति=वस्तु है । वधू+अलंकारः=**वध्वलंकारः**=वधू (वहू) का गहना । पितृ+अनुमतिः=**पित्रनुमतिः**=पिता की स्वीकृति । मातृ+आज्ञा=**मात्राज्ञा**=माता की आज्ञा । भ्रातृ+उक्तम्=**भ्रात्रुक्तम्**=भाई का कहा हुआ ।

**एच इति**—एच्–ए ओ ऐ औ–के स्थान में क्रम से अय्, अव्, आय्, आव् ये आदेश हों, अच् के परे रहने पर ।

**यथासंख्येति**—समसम्बन्धी विधि यथासंख्य होती है अर्थात् यदि उद्देश्य तथा प्रतिनिर्देश्य—स्थानी और आदेश–की संख्या समान हो

